# एतस्य बालस्य स्वप्नाः व्यर्थाः न स्युः।

# ते च साकारतां प्राप्नुयुः बालोपायनवर्धननिधेः साहाय्येन।



भवतः अपत्याय तादृशम् उपायनं ददातु,.यच्च वर्धेत तेनैव सह। 'युनिट् ट्रस्ट्'संस्थायाः बालोपायननिधियोजनायां धनं निक्षिपतु। भवता निक्षिप्तं धनं, यदा भवदपत्यं २१ वर्षीयं भवति तदा, अपत्यस्य अपेक्षायाः अनुगुणम् उपयोगाय भवेत्।

प्रतिवर्षं किञ्चित् किञ्चित् इव सञ्चिन्वन् कदाचित् भवान् प्रभूतं धनराशिं भवदपत्याय दातुं शक्नोति। अथवा भवदपत्यं २१ वर्षीयं यदा भवति तदा तत् लक्षाधिपतिम् अपि कर्तुं शक्नोति। (अनिवार्यतायां सत्याम् अष्टादशे वयसि अपि अपत्यं धनं स्वीकर्तुम् अर्हति।)

'युनिट् ट्रस्ट्'संस्थायाः बालोपायनवर्धननिधियोजना अपूर्वा। अल्पा योजना उत्तमं भविष्यं कल्पयिष्यति।

आवेदनपत्राणि युनिट्ट्रस्ट्शाखासु, सर्वेषु वित्तकोषेषु, सङ्ग्रहकेन्द्रेषु च स्वीक्रियन्ते।

अधिकविवरणार्थम् आवेदनपत्रार्थं च युनिट्ट्रस्ट्शाखां, मुख्यप्रचारकं, प्रतिनिधिं वा पश्यन्तु।

बालोपायनवर्धननिधिः

~~१२%~~ १४% लाभांशवितरणम्

~~५~~ ३ वर्षेषु एकवारम् अधिलाभांशवितरणम्




**युनिट् ट्रस्ट् आफ् इण्डिया**

**या च संस्था २२ वशकोट्यधिकानां 'युनिट्'स्वीकर्तॄणां सेवां करोति।**

यत् अत्र निक्षिप्यते तस्य सुरक्षा चिन्त्यते विशेषतः। धनानिक्षेपतः पूर्वं प्रतिनिधिना मार्गदर्शकेन सह वा समालोचनं कुर्वन्तु।

**Branch Offices:** • Madras Ph: 517101, 517178 • Coimbatore Ph: 210399 • Madurai Ph: 34597 • Trichy Ph: 27774

Sista's UTI.1968 92 SKT

# सानन्दं नृत्यन्त, कैम्पको गीतं गायन्त!

"इदं दुग्धपूरितं मण्डसमन्वितं स्वादसंयुक्तं स्वप्नसमृद्धम्
मम प्रियतमं चॉकोलेटम् कैम्पको मण्डयुक्तं दुग्ध-चॉकोलेटम्!"

**भारतस्य विशालतम नूतनतम संयन्त्रात्**
कॅम्पको लिमिटेड,मंगळूर




R K SWAMY/BBDO CL 10117 SK



PANDA

*A wide range of soft toys from the Chandamama Collection – each with its own unique appeal!*

*Every Soft Toy in the Chandamama Collection has been specially made to bring your child years of warmth and friendship.*

 *Totally Safe – for children of any age..*

 *Durable – high quality synthetic fibre used.*

 *Washable – will not lose shape.*



BOW–WOW

*And now – a surprise gift offer !*

*With every Chandamama Soft Toy you buy. Ask your shopkeeper for a*

**Free Gift Coupon.**

*Simply fill it in and mail it to the given address. We will post you gifts that will keep your child amused and happy for hours.*

*Buy Now – offer open for a limited period only!*

*Available at all leading outlets.*



JUMBO



SPORTY




**CHANDAMAMA**

**COLLECTION**

ARTIG/CT/1142






मैगी-स्काई-क्लेज़र इति भवतः
क्रीड़ायां घनेषु आरुहय विहरन्तु।

मैगी-जिगूसा-पज़ल् इत्यनेन
सार्धं मैगी-पराक्रम-विश्वं सम्यक्
संयोजयन्तु।



मैगी-एस्-एड्वेन्चरर्स्
क्रीडायां सागरतो नभस्तलपर्यन्तं
आरोहणाभियानं पूर्णतां नयन्तु।

मैगी-हू-डन्-इट्- क्रीडायां चौरं
निगृह्णन्तु।

# विनोदप्रियाणां कृते आश्चर्यकराः पराक्रमाः!

## मैगी-क्लब्- सदस्येभ्यः निःशुल्कं उपहाराः।

मैगी-रेडर्स-ऑफ-द-रेड्-स्टार
इति भवतः क्रीडायां चातुर्यपूर्णान्
अनभिज्ञान् विरुध्य भवतो
विनोदित्वं तोलयन्तु।






**भो** बालाः! मैगी-क्लब्-सदस्याः भवन्तु तथा
मैगी-जगतः पराक्रमेषु प्रविशन्तु।

एतत् केवलं मैगीनूडल्स्-
रिक्त-पिष्टिकातः पञ्च-प्रथमावरणात् कर्त्तयित्वा
स्व-मनोनुकूलं उपहारमधिगन्तुं प्रत्येकं अस्मान्
प्रेषयन्तु। षट्सु अष्टसु वा सप्ताहेषु भवन्तो मैगीक्लबतः
भवद्रुचेः अनुकूलं आमोदभरितं लोभहर्षकं उपहारं
अवाप्स्यन्ति।

स्मर्त्तव्यमिदं यत् स्वमनोनुकूलोपहारेण सार्धं
स्वनाम-धामसंकेत-जन्मतिथि मपि अस्मान् प्रेषयन्तु।
यदि भवान् मैगी-क्लब्-सदस्यो नास्ति, तदपि भवतः कृते
स्वर्णिमोऽयमवसरः। यदा उपरितन - विवरणं प्रेषयति
भवान् तदा केवलं सदस्यतावाप्तये निवेदयतु। अपि च,
वयं भवतः उपहारेण सार्धं निःशुल्कं
मैगी-क्लब्-सदस्यतापत्रमपि प्रेषयिष्यामः।




निःशुल्कं मैगी 'वर्ल्ड आफ एनीमल्स' प्रश्नमाला!
प्रत्येकमपि उपहारद्वयं, यद् भवान् अधिगच्छति,
तेन सार्धं निःशुल्कं मैगी-'वर्ल्ड आफ एनीमल्स'-
प्रश्नमालामपि भवान् अधिगन्तुमर्हति।

अस्माकं संकेतोऽस्ति
**MAGGI CLUB**
P.O. Box 5788 New Delhi-110 055

अपरोऽपि उपहारः अधुनावधि यदि भवता मैगी-बर्डहाउस् नैव अवाप्तम् चेत् तदा सम्प्रति अवाप्नोतु!

A CHANDAMAMA PUBLICATION

# चन्दमामा

संस्थापकः– 'चक्रपाणिः' सञ्चालकः– 'नागिरेड्डी'

## कालोऽयम् सन्तोष-संविभागार्थम्

प्रायः समग्रे जगति मासेऽस्मिन् जनाः क्रिसमसनिमित्तं स्वबन्धुभ्यः मित्रेभ्यः वा शुभाशयानां प्रेषणे व्यग्राः भवन्ति। अतः इदानीं पत्रालये पत्रप्रवाहः एव द्रष्टुं शक्यः।

प्रायः शुभाशयस्य आकारः एवं भवति– 'क्रिसमस् आनन्ददायि भवतु' इति, 'नवं वर्षं शुभदायकम् ऐश्वर्यवर्धकं च भवतु' इति वा। केचन एव स्मृत्वा लिखेयुः– 'शान्तिसमेतं चापि' इति। अत्र प्रयुक्तयोः 'शुभदायकम्' 'शान्तिसमेतम्' इत्येतयोः पदयोः कः आशयः?

मानवस्य नैसर्गिकी प्रवृत्तिः यत् सः स्वकीयम् आनन्दं संविभक्तुम् इच्छति। यदा आत्मनि आनन्दः उत्पद्यते तदा तस्य मुखे मन्दहासः विलसति, आनन्दपूरस्य आधिक्ये तु तस्य मुखात् प्रकटहासः निर्गच्छति। उभयविधः अपि हासः अभिमुखतां सम्पाद्य जनान् आकर्षति। मन्दहासः अन्तरङ्गे प्रभावम् उत्पादयति चेत् प्रकटहासः स्वसदृशम् एव हासम् अन्यस्मिन् उत्पादयति। तदा प्रतिक्रियारूपेण हस्तेन अभिनन्दनम् आलिङ्गनं वा प्रचलति। शब्दैः आनन्दस्य प्रकाशनम् अपि सन्तोष-संविभागस्य अपरः प्रकारः। अन्यजनस्य सन्तोषस्य दर्शनात् सन्तोषः यथा, तथैव असूया अपि उत्पन्ना भवेत् कदाचित्। यतः असूया अपि मानवसहजः कश्चन गुणः। किन्तु असूया सदापि स्वस्य एव असन्तोषस्य कारणं भवति इति तु न विस्मर्तव्यम्।

स्वस्य सन्तोषस्य रक्षणं न हि क्रूरव्यवहारेण भवति, न वा दुष्टचिन्तनेन; अपि तु अन्यस्य कष्टकाले सानुकम्पं साहाय्यदानेन, सज्जनेषु आदरप्रकटनेन, सत्कर्मणां श्लाघनेन च।

ईदृशस्य सन्तोषसंविभागस्य साक्षात् फलम् एव शान्तिः। यदा मानवेषु समानता भवति तदा एव शान्तिः। एषा समानताभावना च शुभाशयपत्रमाध्यमेन शुभसन्देशकथनमाध्यमेन वा व्यक्ता भवति। पर्वादिसन्दर्भेषु केवलं सन्तोषसंविभाग-शान्ति-समानतादीनां चिन्तनम् इति न। प्रतिदिनं सर्वस्य अपि चिन्तनं समाजहिताभिमुखं स्यात्।

सम्पुटः–९ डिसेम्बर्–१९९२ सञ्चिका–९

प्रतिकृतिमूल्यं रू. ४-०० * वार्षिकं ग्राहकशुल्कं रू. ४८-००

CHITRA

# नामनिर्वचनम् - ३

(निर्वचनं नाम शब्दानाम् अवयवार्थस्य निरूपणम्। नामपदेन अत्र सुबन्ताः विवक्षिताः। अस्मिन् विभागे सुबन्तानाम् अवयवार्थस्य निरूपणं क्रियते। आदौ तु संज्ञाशब्दानाम् (पुरुषाणां स्त्रीणां च) अवयवार्थाः निरूप्यन्ते।)

**माधवः–** मायाः लक्ष्म्याः धवः पतिः–माधवः। लक्ष्म्याः पतिः इति तात्पर्यम्। यदुराजस्य ज्येष्ठः पुत्रः मधुः। मधोः अपत्यम्(अण्) इति वा माधवः। मधुवंशे जातः इति तात्पर्यम्। अतः माधवपदस्य अर्थः लक्ष्म्याः पतिः इति, मधुवंशे जातः इति वा सिद्ध्यति। मधुनामकस्य राक्षसस्य हन्ता इति, यस्य अन्यः नायकः नास्ति सः इत्यपि अर्थाः उच्यन्ते। एते सर्वे विष्णोः पर्यायवाचिनः एव। एतदतिरिच्य वसन्तऋतु-मधु-शर्करादयः अन्ये अपि बहवः अर्थाः सन्ति एव।

**कुमारः–** कौ मारयति दुष्टान् इति कुमारः। [कु+मृङ्(प्राणत्यागे)+णिच्+अच्] कुमारयति (कुमार-क्रीडायाम्) क्रीडति इति वा। यः दुष्टान् राक्षसान् मारितवान् सः पार्वतीपुत्रः कुमारः। यः आधिक्येन क्रीडति सः अपि कुमारः इति उच्यते। पञ्चवर्षपर्यन्तं कौमारं वयः इति उच्यते। अस्मिन् वयसि बालाः प्रायः सदा क्रीडन्ति। अतः ते कुमाराः। कालान्तरे सर्वविधबालकेषु एषः शब्दः रूढः जातः। शुकयुवराजादिषु अन्येषु अर्थेषु अपि एषः प्रयुक्तः अस्ति एव।

**उमा–** उः×महेशः। ओः महेशस्य मा लक्ष्मीः उमा। परमेश्वरस्य ऐश्वर्यभूता इति तात्पर्यम्। उं शिवं माति अभिव्याप्नोति इति वा उमा। माता पार्वतीम् 'उ' इति सम्बोध्य 'मा' इति तपसे गमनं निषिद्धवती इत्यतः अपि एषा उमा। एषः एव आशयः कालिदासेन कुमारसम्भवे प्रकाशितः– "उमेति मात्रा तपसे निषिद्धा पश्चादुमाख्यां सुमुखी जगाम" इति।

---

**सूचना–** *भवन्तः कस्यचित् नाम्नः अर्थं ज्ञातुम् इच्छन्ति चेत् कृपया लिखन्तु। निर्वचनं कृत्वा अत्र प्रकाशयिष्यामः।*

सङ्केतः- संस्कृतचन्दमामा 'अक्षरम्' ८ क्रास्, गिरिनगरं II फेस्, बेङ्गलूरु-५६००८५.

वार्ताविशेषः–

# पश्चिमैशियाप्रदेशे नूतनाः शान्तिप्रयत्नाः

इस्रायिल्देशे पञ्चदशवर्षेभ्यः 'लीकुड्पक्ष'स्य यत् शासनम् आसीत् तदिदानीं परिसमाप्तम्। इदानीं तत्र लेबर्पक्षेण अधिकारः गृहीतः अस्ति। अतः एवं सम्भाव्यते यत् पश्चिमैशियासमस्यायाः दूरीकरणे कोऽपि मार्गः प्राप्येत इति।



गते जून्मासे १२० स्थानात्मकस्य इस्रायिल्लोकसभायाः निमित्तं निर्वाचनं प्रवृत्तम्। तस्मिन् निर्वाचने लेबर्पक्षेण ४७ स्थानानि प्राप्तानि। यस्य शासनं प्रचलत् आसीत् तेन लीकुड्पक्षेण केवलं ३३ स्थानानि प्राप्तानि। यद्यपि लेबर्पक्षेण सर्वकाररचनार्थम् आवश्यकं स्थानबलं न प्राप्तं, तथापि १२ स्थानानि प्राप्तवता मेरेट्ज्पक्षेण सहकारः दत्तः इत्यतः लेबर्पक्षेण सर्वकारः रचितः। पञ्च स्थानानि प्राप्तवद्भिः अरबपक्षैः अपि लेबर्पक्षस्य साहाय्यम् उद्घोषितम्।

एतेन क्रमेण लेबर्पक्षस्य नेता इजाक् राबिन् नूतनः प्रधानमन्त्री (रोशमेम् शाहलाह्) जातः। लीकुड्पक्षस्य नेतुः इजाक् शामिर्वर्यस्य शासनं समाप्तम्।

शामिर्शासनकाले पालिस्तिन्जनाः बहूनि कष्टानि अनुभूतवन्तः आसन्। हिंस्रान् अत्याचारान् दृष्टवन्तः आसन्। इदानीं तु शासनपरिवर्तनस्य कारणतः इस्रायिल्पालिस्तिन्देशयोः मध्ये नूतनानि शान्तिस्थापकानि पदानि निक्षिप्यन्ते इति परिभाव्यते।

इजाक् राबिन् ७० वर्षेभ्यः पूर्वं जरूसलेम्नगरे जन्म प्राप्तवान्। तस्य मातापितरौ पूर्वयुरोपतः आगत्य पालिस्तिन्प्रदेशे वासं कृतवन्तौ आस्ताम्। अतः 'इस्रायिल्देशे एव जातः (साब्रा) प्रधानमन्त्री' इति राबिन्वर्यस्य कीर्तिः अस्ति। भूतपूर्वः प्रधानमन्त्री तु एतादृशः न आसीत्।

राबिन् कृषिविद्यालयतः शिक्षणं प्राप्य 'पाल्माक्'नामकं रहस्ययुद्धबृन्दं प्रविष्टवान्। यदा इस्रायिल् स्वतन्त्रं जातं तदा एषः 'सुरक्षादले' स्थानं प्राप्तवान्। पुनः अल्पे एव काले तत्रैव सः प्रधानाधिकारी अपि जातः। १९६८ तमे वर्षे इस्रायिल्देशस्य राजदूतः

सन् सः अमेरिकादेशं गतवान्। ततः पञ्चवर्षाणाम् अनन्तरं सः स्वदेशं प्रत्यागतः। १९७४ तः १९७७ तमवर्षं यावत् सः लेबर्पक्षस्य नायकः सन् देशस्य प्रधानमन्त्रिपदवीम् अलङ्कृतवान् आसीत्।

ततः लीकुड्-लेबर्पक्षयोः सम्मिश्रः सर्वकारः १९८४ तः १९९० पर्यन्तम् आसीत्। तत्समये राबिन्वर्यः गृहमन्त्री सन् देशसेवां कृतवान्।

इदानीं यः सर्वकारः रचितः ततः निरीक्ष्यते यत् दीर्घकालतः अनुवृत्ता पालिस्तिन्समस्या परिहृता भवेत् इति। राबिन्वर्यः स्वीये आकाशवाणीभाषणे दूरदर्शनभाषणे च उक्तवान् अस्ति यत् इदानीन्तन-सामाजिकावश्यकतायाः अनुगुणं शासनस्य विधि-विधानेषु योग्यं परिवर्तनम् आनेष्यते इति। एतत् वचनं कियता प्रमाणेन कार्यान्वितं भवेत् इति तु कालान्तरे ज्ञायते।

राबिन्वर्यः अरबनायक जोर्डान्राजं, लेबिनान्-सिरियादेशयोः अध्यक्षौ च चर्चार्थं जेरूसलेमनगर प्रति आहूतवान् अस्ति। इस्रायिल्देशेन आक्रान्तेषु प्रदेशेषु यत् भवननिर्माणं प्रचलति स्म तत् इदानीं स्थगितम् अस्ति।

ततः ईजिप्ट्देशस्य अध्यक्षेण होस्नीमुबारकवर्येण मेलितुं राबिन्वर्यः स्वयं कैरोनगरं गतवान्, चर्चां कृतवान् च। पश्चिमैशियाप्रदेशे शान्तेः उपस्थापनार्थम् एषः योग्यः समयः इति उभौ अपि अङ्गीकृतवन्तौ।

एतस्मिन् एव सन्दर्भे पालिस्तिन्-विमोचनसंस्थया (पि.एल्.ओ) अग्रे आगत्य प्रार्थितं यत् पञ्चाशद्वर्षेभ्यः पूर्वं पालिस्तिन्जनान् अपसार्य वशीकृतात् पश्चिमतीरप्रदेशात् गाजाप्रदेशात् च इस्रायिल्देशेन अचिरात् एव प्रतिगन्तव्यम् इति।

पि.एल्.ओ नायकेन यासर्-अराफत्वर्येण इच्छा प्रकटिता अस्ति यत् अहं प्रधानमन्त्रिणा राबिन्वर्येण मेलितुं सिद्धः इति।

पश्चिमैशियाप्रदेशे शान्तिं सुस्थिरं स्थापयितुं वाशिङ्ग्टन्नगरे चर्चा प्रचलति। एतस्यां चर्चायां भागं वहता प्रधान-मन्त्रिणा राबिन्वर्येण ये नूतनाः प्रस्तावाः उपस्थाप्यन्ते तान् सर्वे देशाः सकुतूहलं प्रतीक्षमाणाः सन्ति। यदि दैवानुग्रहः स्यात् तर्हि पश्चिमैशियाप्रदेशे शान्तिः अवश्यं स्थापिता भवेत्।





# पिशाचीनिवारणम्

रङ्गपुरनामके कस्मिंश्चित् लघुनगरे कैलासपतिः नाम कश्चित् सर्वकारीये उद्योगे आसीत्। तस्य उद्योगः लघुः। तस्य विवाहः जातः। पत्नीं कात्यायनीं नगरं प्रति आनेतुम् इच्छन् कैलासपतिः भाटकगृहस्य अन्वेषणं कृतवान्। बहुधा अन्वेषणस्य अनन्तरं नगरात् बहिः स्थितम् एकं गृहं प्राप्तम्।

कैलासपतिः ग्रामं गत्वा पत्न्या सह नूतनं गृहम् आगतवान्। पत्नीं गृहं प्रापय्य कैलासपतिः– "भवती वस्तूनि व्यवस्थितं स्थापयतु। अद्य पाकस्य आरम्भः मास्तु। अद्य सायं मम मित्रस्य गृहं गच्छाव" इति उक्त्वा कार्यालायं प्रति गतवान्।

पत्युः निर्गमनस्य अनन्तरं कात्यायनी वस्तूनां स्थापनकार्ये उद्युक्ता अभवत्। सायंपर्यन्तं निरन्तरं कार्यं कृत्वा सा गृहं सुव्यवस्थितं कृतवती।

ततः कूपात् जलम् आनीय सा स्नातवती। क्षालितानि वस्त्राणि धृत्वा स्वागतप्रकोष्ठे आसन्दे उपविश्य मातृगृहतः आनीतैः पुष्पैः माला रचयितुम् उद्युक्ता अभवत्।

तावता काचित् वानरी वातायनमार्गेण गृहस्य अन्तः आगतवती। वानरीं दृष्ट्वा भीता कात्यायनी आसनात् उत्थितवती। तावता सा वानरी पिशाचीरूपं धृत्वा– "अये! किमर्थं दिग्भ्रान्ता! किं राक्षसी दृष्टा वा भवत्या? न खलु? अहम् अस्मि एतस्य गृहस्य स्वामिनी। पञ्चविंशतिवर्षेभ्यः पूर्वम् आभरणादीनि विक्रीय एतत् गृहं निर्मापितवती अहम्। किन्तु पत्युः पान-द्यूतादिव्यसनानां कारणतः गृहं विक्रेतव्यम् अभवत्। एतस्मिन् गृहे अहं यथा इच्छामि तथा व्यवस्था भवेत्" इति उक्त्वा आसन्दे उपविष्टवती।

कात्यायनी तु भीत्या कम्पमाना किं करणीयम् इति अजानती मौनं स्थितवती।

"श्रीमाता"



"अये, किमर्थं मौनं स्थितवती? गृहस्वामिन्यै मह्यं खाद्यादिकं दातव्यम् इत्यपि न जानाति वा भवती? गत्वा शीघ्रं खाद्यम् आनयतु" इति उक्तवती पिशाची।

कात्यायनी कम्पमाना एव अन्तः गत्वा मातृगृहतः आनीतानि लड्डुकादीनि खाद्यानि आनीय पिशाच्याः पुरतः स्थापितवती। पिशाची तानि सन्तोषेण खादितवती। खादनानन्तरं गृहं समग्रं परिशील्य— "हा हन्त! गृहम् एतत्,उत श्मशानम्? वस्तूनां स्थापनार्थम् आश्रितः कः क्रमः एषः? धिक् भवत्याः गृहिणीत्वम्। मया यथा उच्यते तथा वस्तूनि स्थापयतु तावत्। पाकशालावस्तूनि स्वागतप्रकोष्ठे स्थापयतु, अन्तिमप्रकोष्ठे आसन्दादीनि स्थापयतु" इति।

'एवं कृत चेत् गृहस्य शोभा नश्यति' इति भीतियुक्तेन मन्दस्वरेण उक्तवती कात्यायनी। किन्तु पिशाची— "अत्र गृहस्वामिन्याः मम निर्णयः एव अन्तिमः। यदि भवती मम वचनं न पालयेत् तर्हि भवत्याः रक्तं पिबेयम्" इति कोपेन उक्तवती। भीता कात्यायनी पिशाच्या यथा सूचितं तथैव वस्तूनि स्थापितवती।

अत्रान्तरे कार्यालयतः आगच्छतः कैलासपतेः पादध्वनिः श्रुतः। तदा पिशाची— "भवत्याः पतिः आगच्छन् अस्ति इति भाति। मम विषये तं किमपि मा वदतु। यदि वदेत् तर्हि भवत्याः प्राणाः शरीरात् निर्गच्छेयुः। स्मरतु एतत्" इति उक्त्वा वानरीरूपं धृत्वा वातायनमार्गेण निर्गतवती।

गृहम् आगतः कैलासपतिः वस्तूनां स्थापनक्रमं दृष्ट्वा कोपम् अनुभवन्— "अहो अव्यवस्था! गृहे वस्तूनि कथं स्थापनीयानि इत्यपि अजानती भवती कथं वा गृहिणीपदं निर्वहेत् इत्येव न ज्ञायते। हुँ, सर्वं मम दौर्भाग्यस्य फलम्" इति वदन् सर्वाणि वस्तूनि यथास्थानं स्थापितवान्। यदा तत् कार्यं समाप्तं तदा दशवादनं जातम् आसीत्। इतः परं भोजनार्थं मित्रस्य गृहं प्रति गमनम् उचितं न भवेत् इति चिन्तयित्वा कैलासपतिः जलं पीत्वा शयनं कृतवान्। कात्यायनी अपि मौनम् अश्रूणि स्रावयन्ती जलं पीत्वा शयनं

कृतवती।

पिशाच्याः पीडा वक्तव्या इति इच्छन्ती अपि कात्यायनी पिशाच्या उक्तानि जागरूकतावचनानि स्मरन्ती मौनम् आश्रितवती। अनन्तरदिने प्रातः कैलासपतिः श्वशुरगृहतः आनीतानि खाद्यानि खादित्वा– "मध्याह्ने भोजनार्थं गृहम् आगमिष्यामि। द्वादशवादनाभ्यन्तरे पाकः समाप्तः भवेत्" इति उक्त्वा कार्यालयं गतवान्।

कात्यायनी यावत् पाकम् आरब्धवती तावता तत्र आगता पिशाची कात्यायन्याः पार्श्वे एव पीठं संस्थाप्य तदुपरि उपविष्टवती। अनन्तरं कात्यायन्याः द्वारा बलात् व्यञ्जने मुष्टिमितं लवणं योजितवती। क्वथिते च अधिकं कटु योजितवती। ताक्रे च मृत्तिकाम् आनीय पातितवती। आत्मनः निमित्तं च समीचीनं पाकं कारयित्वा आतृप्ति भुक्तवती। यावत् कैलासपतेः आगमनं दृष्टं तदा वानरीरूपं प्राप्य वातायनमार्गेण निर्गतवती च।

बुभुक्षितः कैलासपतिः हस्तौ पादौ च प्रक्षाल्य भोजनार्थम् उपविष्टवान्। किन्तु अहो पाकः! क्वथिते कटुता, व्यञ्जने लवणाधिक्यं, ताक्रे च मृत्तिकामयत्वम्। सः क्रोधेन स्थालिकां दूरे क्षिप्त्वा– "अये मूर्खशिखामणे! भवतीं परिणयता मया कीदृशी अविवेकिता कृता! सामान्यं पाकम् अपि कर्तुम् अशक्नुवती भवती न जाने, कथं गृहिणीपदं निर्वहेत्" इति। सर्वं पूर्वजन्मनः






पुण्यस्य फलम्'' इति निन्दित्वा कार्यालयं गतवान्। कात्यायनी अश्रूणि स्रावयन्ती कृतं पाकं बहिः क्षिप्त्वा पाकशालां स्वच्छीकृतवती। एवम् एव सप्ताहद्वयं प्रवृत्तम्। कात्यायनीं नितरां पीडयन्ती पिशाची तस्याः नेत्राभ्यां निःसृताम् अश्रुधारां दृष्ट्वा सन्तोषम् अनुभवति स्म।

सप्ताहानन्तरं कदाचित् कात्यायनी पतिं भीतिमिश्रितेन स्वरेण पृष्टवती– ''अहं त्रिचतुराणि दिनानि मातृगृहं गत्वा आगच्छामि वा?'' इति।

''अहो सौभाग्यम्! अवश्यं गच्छतु। यावत् भवती अत्र न भवति तावत् अहं शान्त्या तिष्ठेयम्'' इति उक्तवान् कैलासपतिः।

सप्ताहाभ्यन्तरे एव क्षीणतां गतां पुत्रीं दृष्ट्वा माता प्रीत्यातिशयेन पृष्टवती– ''अहो क्षीणता! कथम् एवं जाता भवती? पतिः भवतीं बहु पीडयति वा?'' इति।

कात्यायनी निराकरणपूर्वकं शिरः चालयन्ती उच्चैः रोदनं कृतवती। एकम् अपि वचनं न निर्गतं तस्याः मुखतः। 'अनिर्वचनीयं कष्टं किमपि स्यात्। दुःखोद्वेगः यदा शाम्यति तदा सा एव स्वयं वदेत्' इति चिन्तयन्तौ मातापितरौ मौनं स्थितवन्तौ। कात्यायनी अपि मातापितरौ किमपि न उक्तवती। सायं यदा अग्रजः आञ्जनेयः क्षेत्रकार्यं समाप्य गृहं प्रत्यागतः तदा रुदती एकान्ते तं समग्रं निवेदितवती।

सर्वं श्रुत्वा आञ्जनेयः सान्त्वनस्वरेण– ''भगिनि! अलं रोदनेन। भीतिः मास्तु भवत्याः। सप्ताहाभ्यन्तरे तां पिशाचीं ततः उच्चाटयिष्यामि। भवती निश्चिन्ता भवतु'' इति उक्त्वा कात्यायन्याः अश्रूणि मार्जितवान्।

अनन्तरदिने सायं सः नगरं गत्वा आवुत्तस्य कार्यालयं गत्वा आवुत्तं दृष्टवान्। आञ्जनेयं दृष्ट्वा कुपितः कैलासपतिः– ''किमर्थम् अत्र आगतं भवता? पत्न्याः अनुपस्थितौ वराकः भगिनीपतिः कीदृशं कष्टम् अनुभवन् अस्ति इति ज्ञातुं वा? सुखेन अस्मि अहम्। तृप्तः खलु भवान्?'' इति उपहासमिश्रितेन स्वरेण उक्तवान्।

आञ्जनेयः हसन्– ''शान्तः भवतु'' इति

प्रीत्या उक्त्वा तस्य स्कन्धस्य उपरि हस्तं स्थापयित्वा तं बहिः नीतवान्। एकान्ते उपविश्य पिशाचीपीडां, कात्यायन्याः असहायकतां च विस्तरेण निवेदितवान् च। अनन्तरम्– "एषा वस्तुस्थितिः। अतः भवता किञ्चित् शान्ततया व्यवहरणीयम्। सप्ताहाभ्यन्तरे तां पिशाचीं दूरं प्रेषयिष्यामि। भवता मम साहाय्यं करणीयम्" इति उक्त्वा तेन कथम् आचरणीयम् इति विस्तरेण सूचितवान्। कैलासपतिः एतत् सन्तोषेण अङ्गीकृतवान्। ततः आञ्जनेयः गृहं गत्वा भगिनीं सर्वं निवेद्य तया किं करणीयम् इत्यपि सूचयित्वा तां पतिगृहं प्रेषितवान्।




यदा कात्यायनी पतिगृहं प्रविष्टवती तदा वानरीरूपेण गृहं प्रविश्य स्वरूपं प्राप्य पिशाची कात्यायन्याः पार्श्वे स्थित्वा– "भवती बहूनि दिनानि यावत् मातृगृहे एव तिष्ठेत् इति भीतिः आसीत् मम। अहो, महती बुभुक्षा मम! त्वरया मम सूचनायाः अनुगुणं पतिनिमित्तं पाकं सज्जीकृत्य मन्निमित्तं रुचिकरं पाकं करोतु। हुँ, त्वरया" इति अवदत्।

मध्याह्ने भोजनसमये कैलासपतिः कष्टेन भोजनं कुर्वन् अपि– "अहो रुचिः पाकस्य! रुचिकरः पाकः अद्य" इति उच्चस्वरेण उक्तवान्।

सायं पिशाच्याः सूचनायाः अनुगुणम् उष्णजलस्य स्थाने पत्युः स्नानार्थं शीतलं जलं स्थापितवती आसीत् कात्यायनी। "शीतलजलेन स्नानम् आरोग्यवर्धकम्। तत्रापि सायं शीतलजलस्नानम् आह्लादकरम्" इति वदन् गायन् स्नानं कृतवान् कैलासपतिः।

रात्रौ शयनार्थं पिशाच्याः सूचनायाः अनुगुणं मञ्चस्य उपरि तल्पस्य स्थाने कम्बलं प्रसारितवती आसीत् कात्यायनी। "अहो, आनन्दः! तापकाले कम्बलस्य उपरि शयनेन विशिष्टः अनुभवः प्राप्यते। इङ्गितज्ञा भवती" इति पत्न्याः श्लाघनं कृतवान् कैलासपतिः।

एतत् सर्वं श्रुत्वा पिशाची दिग्भ्रान्ता। अनन्तरदिने एकाकिनीं कात्यायनीम्

उक्तवती सा– "किम् एतत्! पत्नी यद्यत् करोति तत्सर्वम् अनुचितं चेदपि भवत्याः पत्युः प्रियं जातं खलु? कथं सः एवं परिवृत्तः? किं तस्य विवेकः नष्टः, उत सः मतिभ्रान्तः? अथवा वशीकरणमन्त्रेण भवती किमपि कृतवती स्यात् वा?" इति।

पूर्वनिश्चयस्य अनुगुणम् आञ्जनेयः प्रातःकाले भगिन्याः गृहम् आगतवान्। तस्य आगमनं दूरात् एव दृष्ट्वा उच्चस्वरेण पाकशालास्थां पत्नीम् उक्तवान् कैलासपतिः– "अये, भवत्याः अग्रजः आञ्जनेयः आगतः अस्ति पश्यतु" इति।

पत्युः वचनं श्रुत्वा कात्यायनी पाकशालातः एव उक्तवती– "अग्रज! पूर्वसूचनां विना कथं भवतः आगमनं जातम्?" इलि।

तदा आञ्जनेयः– "मम मित्रं देवेन्द्रः नगरे उद्योगी। तस्य पत्नी पिशाचेन ग्रस्ता आसीत्। ह्यः सायम् अहं तं पिशाचं गृहीत्वा भूमौ गर्ते स्थापयितुं कूपिकायां योजितवान्। तदा सः पिशाचः माम् अवदत्– 'अये, एकाकी अहं खेदम् अनुभवामि। अतः अन्यां पिशाचीं मया सह स्थापयित्वा मां गर्ते पातयतु। एतावत् वा कृपां प्रदर्शयतु' इति। अहम् एतत् अङ्गीकृतवान्। एतत्प्रदेशे कुत्रापि काऽपि पिशाची निवसति इति मया श्रुतम् आसीत्। ताम् अन्विष्य ग्रहीतुम् अत्र आगतः। मया गृहीतः पिशाचः कूपिकायाम् अस्ति, पश्यतु तावत्" इति वदन् भगिन्यै कूपिकां प्रदर्शितवान्।

एतत् सम्भाषणं श्रुत्वा पिशाची नितरां भीता सती 'काँव् काँव्' इति रवं कुर्वती ततः उड्डीय वानरीरूपं प्राप्य दूरस्थम् अरण्यं प्रविष्टवती।

पिशाचनिर्गमनं दृष्ट्वा कैलासपतिः आञ्जनेयं कृतज्ञतापूर्वकम् उक्तवान्– "मित्र! भवता बहुधा उपकृतौ आवाम्। वस्तुस्थितिम् अजानन् अहं कोपवचनैः भवतः भगिनीं निन्दितवान्। कृपया क्षन्तव्यः अहम्" इति।






७

(सारससरोवरस्थे भवने विश्रान्त्यर्थं स्थापिता युवराज्ञी, विद्यावती अदृश्यतां यदा गता तदा तस्याः अन्वेषणार्थं राज्ञा बहवः प्रयत्नाः कृताः। महेन्द्रनाथः नाम युवकः राज्ञः अनुज्ञां प्राप्य एकाकितया तस्याः अन्वेषणार्थं निर्गतवान्। सः सारससरोवरस्य परिसरं सुसूक्ष्मं परिशीलितवान्। नाविकेन सह वार्तालापं कृतवान् चापि। ततः अरण्यम् उद्दिश्य गतवान् सः। तदनन्तरम्....)

महेन्द्रनाथः सारससरोवरस्य परिसरं जागरूकतया सुसूक्ष्मं परिशीलयन् सर्वत्र अटितवान्। सरोवरं परितः अरण्यम् आसीत्। लतागुल्मवृक्षादयः निबिडतया प्रवृद्धाः आसन् तत्र। महता अन्वेषणेन अपि तत्र कुत्रापि कोऽपि स्पष्टः अस्पष्टः वा मार्गः महेन्द्रनाथेन न दृष्टः। यदा अन्धकारः प्रसृतः तदा वृक्षस्य अधः स्थितायाः शिलायाः उपरि शयानः सः रात्रिं यापितवान्।

प्रातः उत्थाय पुनरपि अन्वेषणप्रयत्नम् अनुवर्तितवान् सः। यत्र सः रात्रौ शयनं कृतवान् आसीत् ततः अनतिदूरे सरोवरे द्वित्राणि सोपानानि अस्पष्टतया दृष्टानि तेन। सोपानानि यथा न दृश्येरन् तथा कर्तुं तेषाम् उपरि वृक्षशाखाः पातिताः आसन्। महेन्द्रनाथः उत्साहेन सोपानानां समीपं गत्वा



ताः शाखाः अपनीतवान्। ततः अरण्यप्रवेशार्थं कञ्चन अस्पष्टं पादमार्गम् अपि दृष्टवान् सः। परिशीलनात् सः ज्ञातवान् यत् एषः मार्गः सद्यः एव निर्मितः इति। सञ्चाररोधस्य निवारणार्थं मार्गे पर्णानि पातितानि आसन्। क्रूरप्राणिनः हठात् यथा आक्रमणं न कुर्युः तथा परितः जागरूकतया परिशीलयन् महेन्द्रनाथः तेन मार्गेण अरण्यं प्रविष्टवान्। मार्गम् उभयतः उन्नताः वृक्षाः आसन्। अतः सूर्यतः आगताः किरणाः तत्र भूमिं न स्पृशन्ति स्म।

तेन मार्गेण गच्छन् महेन्द्रनाथः एकं विशालं क्षेत्रं प्राप्तवान्। मार्गस्य पार्श्वे कश्चन कुटीरः अपि दृष्टः तेन। 'अरण्यमध्ये एषः कुटीरः किमर्थं केन निर्मितः स्यात्?' इति चिन्तयन् परितः परिशीलयन् कुटीरस्य समीपं गतवान् महेन्द्रनाथः।

तावता अनतिदूरात् कश्चन स्वरः श्रुतः– "वत्स! कः भवान्? किं निमित्तम् अत्र आगतः?" इति।

यतः स्वरः आगतः तस्यां दिशि दृष्टिं प्रसारितवान् महेन्द्रनाथः। कश्चन संन्यासी गुल्मानां मध्ये तिष्ठन् जलसेचनं कुर्वन् तेन दृष्टः। रमणीयम् उद्यानं तत्र वर्धितं दृश्यते स्म।

महेन्द्रनाथः झटिति तस्य समीपं गत्वा नमस्कृत्य उक्तवान्– "श्रीमन्! विशेषकार्यस्य निमित्तम् अटन् अस्मि महात्मन्! भवतः दर्शनं जातं यत् तत् तु मम सौभाग्यम्" इति।

सः संन्यासी आजानुबाहुः आसीत्। तस्य मुखे प्रसन्नता प्रसृता दृश्यते स्म। सः मन्दहासपूर्वकं महेन्द्रनाथम् उक्तवान्– "सूर्यास्तः तु जातः एव। यस्य कस्यापि कार्यस्य निमित्तम् आगतः स्यात् नाम भवान्। अद्य रात्रौ अत्रैव स्थित्वा श्वः प्रातः प्रयाणम् अनुवर्तयतु" इति। एतावत् उक्त्वा महेन्द्रनाथस्य स्कन्धे हस्तं संस्थाप्य तं कुटीरस्य अन्तः नीतवान् सः संन्यासी।

उभौ अपि कुटीरस्य अन्तः आगतवन्तौ। संन्यासी कटस्य उपरि उपविशन् महेन्द्रनाथम् अपि कटस्य उपरि

उपवेशितवान्।

"अहं शान्त्यर्थं बहुषु देशेषु भ्रमणं कृत्वा अन्ते अत्र आगतवान्। अत्र वासः यदा आरब्धः ततः आरभ्य अन्यत्र गन्तव्यम् इति विचारः मम मनसि न आगतः। किन्तु अत्र आगमनस्य अनन्तरं प्रथमं दृष्टः मानवः भवान् एव" इति उक्तवान् संन्यासी।

महेन्द्रनाथः मौनम् उपविश्य संन्यासिनः पादौ मृदु मर्दयन् आसीत्। संन्यासी तं पृष्टवान्– "वत्स! स्वपरिचयः न उक्तः खलु भवता? कस्य कार्यस्य निमित्तम् अत्र आगतः भवान्?" इति।

तदा महेन्द्रनाथः उक्तवान्– "श्रीमन्! मम नाम महेन्द्रनाथः इति। अहं वीरगिरिराज्यीयः। बाल्ये एव पितृवियोगः प्राप्तः मया। तदा अहं मात्रा सह पितृव्यस्य गृहे आश्रयं प्राप्तवान्। किन्तु दौर्भाग्यवशात् प्रसूतिसमये पितृव्यपत्नी प्राणान् अत्यजत्। पत्नीवियोगदुःखम् असहमानः मम पितृव्यः वैराग्यं प्राप्य गृहात् कुत्रापि निर्गतवान्। ततः अहं माता च आश्रयहीनौ जातौ। ततः आरभ्य माता पुष्पमालाः विरचय्य देवीमन्दिरसमीपे विक्रीय अल्पं धनं सम्पाद्य मां पोषितवती" इति।

एतानि वचनानि श्रुत्वा संन्यासी स्वस्य पादौ झटिति पृष्ठतः आकृष्य पुटीकृत्य उपविष्टवान्। 'प्रायः मम व्यथाजनिकां कथां श्रुत्वा सः एवं कृतवान् स्यात्' इति आलोच्य



महेन्द्रनाथः स्वस्य कथनम् अनुवर्तितवान्– "सप्ताहात् पूर्वं केनचित् दुष्टेन वीरगिरिराजकुमारी अपहृता। राजभटाः सर्वासु दिक्षु तस्याः अन्वेषणं कृतवन्तः। किन्तु राजकुमारी कुत्र इति केनापि न ज्ञातम्। अतः राज्ञः अनुमतिं प्राप्य अहं तस्याः अन्वेषणार्थम् अस्पष्टं मार्गम् अनुसरन् अत्र आगतवान्। सौभाग्यवशात् अत्र भवतः दर्शनं जातम्" इति।

"किन्तु वत्स! अत्र समीपे कुत्रापि मानववसतिः तु नास्ति। इतः अग्रे धवलगिरिः नाम उन्नतः पर्वतः अस्ति, यश्च मानवेन आरोढुम् अशक्यः। पर्वतस्य अपरपार्श्वे हिमगिरिराज्यं यद्यपि अस्ति, तथापि पर्वतम्



अतिक्रम्य तत्र गमनं सर्वथा दष्करम्'' इति उक्तवान् संन्यासी।

''महात्मन्! ज्योतिषाचार्येण उक्तम् अस्ति यत् पश्चिमदिशि अन्वेषणप्रयत्नः फलप्रदः इति। अहं तु युवकः अस्मि। कष्टेभ्यः भीतिः सर्वथा नास्ति मम। अस्माकं राजा धर्मात्मा अस्ति। तस्य दुःखस्य दूरीकरणे यथाशक्ति साहाय्यं करणीयम् इति इच्छा मम। एतादृशे कार्ये यदि मम प्राणाः अर्पिताः भवेयुः तर्हि तदपि मम प्रियम् एव'' इति उक्तवान् महेन्द्रनाथः।

''वत्स! योग्यः नागरिकः भवान्। भवतः निर्णयः स्तुत्यः एव। सत्कार्ये सदा दैवम् आनुकूल्यं कल्पयति। अतः इदानीं निश्चिन्ततया निद्रां करोतु। प्रातः प्रयत्नस्य अनुवर्तनं तु अस्ति एव'' इति उक्तवान् संन्यासी।

ततः संन्यासी महेन्द्रनाथः च निद्रां कृतवन्तौ। अचिरात् एव महेन्द्रनाथेन गभीरा निद्रा प्राप्ता।

प्रातः यदा महेन्द्रनाथः जागरितः तदा संन्यासी ध्याने लीनः आसीत्। प्रातर्विधिं समाप्य महेन्द्रनाथः संन्यासिनं साष्टाङ्गं नमस्कृतवान्। तदा संन्यासी मन्दं नेत्रे निमील्य– ''वत्स! भवतः धैर्यं साहसप्रवृत्तिः च अवश्यं भवन्तं विजयिनं करिष्यतः। एतत् अङ्गुलीयकं स्वीकरोतु तावत्। भवदर्थं दिव्यशक्तीः अत्र संयोज्य अभिमन्त्रितवान् अस्मि। एतस्मिन् अङ्गुलीयके यः मणिः अस्ति सः नितराम् अपूर्वः। तस्य सामर्थ्यं कीदृशम् इति अहं न वदामि कालान्तरे भवान् तत् स्वयं ज्ञास्यति। तस्य ज्ञानस्य अनन्तरम् अपि तद्विषये भवता कोऽपि न वक्तव्यः। यदा भवान् तद्विषये किमपि वदति तदा तस्य अपूर्वस्य मणेः सामर्थ्यं नष्टं भविष्यति। कार्यं सम्पाद्य यदा भवान् इतः प्रतिगमिष्यति तदा अत्र आगत्य मां दृष्ट्वा गच्छतु। न जाने, भवतः वियोगतः एकाकिनी भवतः माता कीदृशं कष्टम् अनुभवन्ती स्यात् इति'' इति उक्तवान्।

''श्रीमन्! मम मातुः विषये चिन्तनीयं



नास्ति। तस्याः योगक्षेमस्य व्यवस्थां राजा स्वयं निर्वहन् अस्ति। अतः अहं निश्चिन्तः अस्मि। भवतः इच्छायाः अनुगुणं प्रतिगमनसमये भवन्तम् अवश्यं द्रक्ष्यामि। इदानीं माम् आशिषा अनुगृह्णातु कृपया" इति प्रार्थितवान् महेन्द्रनाथः।

तदा संन्यासी महत्या प्रीत्या तं दृढम् आलिङ्गितवान्। तत्समये संन्यासिनः नेत्राभ्याम् अश्रुधारा निर्गता। एतत् दृष्टवतः महेन्द्रनाथस्य महत् आश्चर्यम्।

महेन्द्रनाथः संन्यासिनं पुनरपि प्रणम्य सेनाधिपतेः वचनं स्मरन् ततः पश्चिमदिशि प्रस्थितवान्। मार्गः उत्तमः तु न आसीत्। तथापि महेन्द्रनाथः निरातङ्कम् अग्रे गतवान्। किञ्चिद्दूरं यदा गतं तदा कश्चन पर्वतः अभिमुखम् आगतः। महेन्द्रनाथः पर्वतस्य आरोहणे उद्युक्तः अभवत्। पर्वतारोहणं यद्यपि कष्टकरं तथापि सः उत्साहेन अग्रे गतवान्। परितः घनारण्यम्। पशुपक्षिणां ध्वनेः ऋते अन्यत् किमपि न श्रूयते तत्र। तथापि महेन्द्रनाथः नीरसतां किञ्चिदपि अननुभवन् अरण्यस्य गभीरसौन्दर्यस्य आस्वादनं कुर्वन् शिखरपर्यन्तं गतवान्।

पर्वतशिखरे काचित् उन्नता भित्तिः दृष्टा महेन्द्रनाथेन। परीक्षणात् तेन ज्ञातं यत् एषा भवनस्य प्राकारभित्तिः इति। समीपे कुत्रापि द्वारं न दृश्यते स्म। अतः महेन्द्रनाथः द्वारम् अन्विष्यन् भित्तिपार्श्वे गतवान्। किञ्चिद्दूरं यदा गतं तदा सोपानानि दृष्टानि। महेन्द्रनाथः सोपानानि आरुह्य गतवान्। अग्रे दृढं लोहद्वारं दृष्टं तेन। द्वारे प्रबला शृङ्खला बद्धा दृश्यते स्म। महेन्द्रनाथः तां शृङ्खलां कम्पयन् उच्चध्वनिम् उत्पादितवान्। अल्पे एव काले दीपहस्तः कश्चित् अन्तर्भागतः आगत्य द्वारम् उद्घाटितवान्। द्वारस्य पुरतः स्थितं महेन्द्रनाथं दृष्ट्वा आश्चर्यम् अनुभवन् सः पृष्टवान्– "मम स्वामी आगतः इति चिन्तयित्वा द्वारम् उद्घाटितं मया। कः भवान्?" इति।

"मम नाम महेन्द्रनाथः इति। वीरगिरिः मम जन्मस्थलम्। दारिद्र्यपीडितः अहम्

उद्योगप्राप्त्याशया हिमगिरिराज्यं गच्छन् अस्मि। कोऽपि उक्तवान् यत् पर्वतमार्गः समीपतरः इति। तथापि दिनत्रयं प्रयाणं कृत्वा अपि अहं तत् राज्यं न प्राप्तवान्। अहो श्रान्तिः! कृपया अन्तः आगन्तुम् अनुमतिं ददातु। रात्रौ अत्र स्थित्वा प्रातः एव इतः निर्गमिष्यामि'' इति उक्तवान् महेन्द्रनाथः।

अङ्गीकारपूर्वकं शिरः चालयन् सः पुरुषः– ''अन्तः आगच्छतु। अहं तावत् एतस्य भवनस्य रक्षकः। अन्तः मम प्रकोष्ठः अस्ति। तत्र रात्रौ शयनं कर्तुं शक्यते'' इति उक्तवान्।

''अनुगृहीतः अस्मि श्रीमन्!'' इति वदन् महेन्द्रनाथः भवनरक्षकम् अनुसृत्य अन्तः गतवान्।

भवनरक्षकः तं स्वप्रकोष्ठे उपवेश्य– ''भवान् अत्रैव उपविशतु। खादनार्थं किमपि आनीय दास्यामि। वस्तुतः मम स्वामिनः आदेशः अस्ति यत् अन्तः कोऽपि न प्रवेशनीयः इति। यदि अद्य मम स्वामी अभविष्यत् तर्हि भवता आश्रयः प्राप्तः न अभविष्यत्'' इति उक्तवान्।

''मत्कारणतः भवान् स्वामिनः कोपस्य पात्रं न भवेत्। अतः श्वः उषसि एव अहम् इतः निर्गमिष्यामि'' इति उक्तवान् महेन्द्रनाथः।

''तथैव करोतु। मम स्वामी अनुशासनप्रियः, किन्तु सः दयालुः जनः।



आश्रयः कीदृशे सन्दर्भे दत्तः इति अहं वस्तुस्थितिं विवृणोमि चेत् सः औदार्येण मां क्षाम्येत् एव। अतः तद्विषये चिन्तां मा करोतु भवान्'' इति उक्त्वा भवनरक्षकः तस्मात् प्रकोष्ठतः निर्गतवान्।

अरण्यमध्ये भवनस्य स्थितिं स्मरतः महेन्द्रनाथस्य मनसि विविधाः विचाराः– 'अरण्ये एतादृशं विशालं भवनं केन उद्देशेन निर्मितं स्यात्? भवनरक्षकः वदति यत् मम स्वामी दयालुः इति। तादृशः जनः राजकुमारीम् अपहृतवान् न स्यात्। अथवा केन ज्ञायते– कस्य हृदये कीदृशाः विचाराः कदा उत्पाद्यन्ते इति। सर्वम् अपि सम्भाव्यते लोके' इति।

भवनरक्षकः स्थालिकायाम् आहारं संस्थाप्य आनीय महेन्द्रनाथाय यच्छन् उक्तवान्– "श्रीमन्! एतावदेव उपलभ्यम् इदानीम्। एतावता एव भवता बुभुक्षा निवारणीया" इति।

"कोऽपि चिन्ता नास्ति। यावत् प्राप्तं तावता एव तृप्तिः मम" इति वदन् आहारं स्वीकृत्य खादन् पृष्टवान् महेन्द्रनाथः– "भवतः स्वामी अत्र पुनः कदा आगच्छेत्?" इति।

"तस्य गमनम् आगमनं वा कदापि निश्चितं न भवति। कदाचित् आगच्छति। पुनः कदाचित् निर्गच्छति। अतः सदा जागरूकतया भवामः वयम्" इति उक्तवान् भवनरक्षकः।

"वयम् इति? तन्नाम अत्र अन्ये अपि सन्ति इति? किं भवतः स्वामिनः परिवारः निवसति वा अत्र?" इति कुतूहलेन पृष्टवान् महेन्द्रनाथः।

"अस्माकं स्वामिनः परिवारः तु नास्ति अत्र। स तु एकाकितया निवसति। यदा सः अत्र भवति तदा स्वप्रकोष्ठे उपविश्य अहोरात्रं ताडग्रन्थानाम् अध्ययनं करोति इति श्रूयते। केभ्यश्चित् दिनेभ्यः पूर्वं काचित् अपूर्वा स्त्री आगता अस्ति। अस्माकं स्वामिना सह समालोचनार्थं सा आगता स्यात् इति अहं भावयामि। तस्याः आगमनस्य अनन्तरं दिनद्वयं यावत् अस्माकं स्वामी स्वप्रकोष्ठात् बहिः कुत्रापि न गतः। ततः कदाचित् उषसि एव त्वरया कुत्रापि निर्गतः। पुनः यदा कदापि सः प्रत्यागन्तुम् अपि अर्हति" इति उक्तवान् भवनरक्षकः।

भवनरक्षकवचनस्य मध्ये श्रुतः 'अपूर्वा स्त्री' इति शब्दः महेन्द्रनाथस्य हृदये आशाकिरणान् उदभावयत्। 'सा अपूर्वा स्त्री युवराज्ञी एव स्यात् कदाचित्। अतः केनचित् व्याजेन अत्र कानिचन दिनानि यावत् वासः करणीयः। किन्तु एतदर्थं कः उपायः?' इति चिन्तयन् स्थितवान् महेन्द्रनाथः।

–(अनुवर्तते)






# स्वहितचिन्तनम्

जनसञ्चाररहिते घोरे श्मशानमार्गे सञ्चारम् एव प्रियां वृत्तिं भावयन् इव त्रिविक्रमः बेतालं वशीकर्तुम् इच्छन् पुनरपि वृक्षस्य समीपं गतवान्। वृक्षम् आरुह्य शाखायां लम्बमानं शवं स्कन्धे आरोप्य अधः आगतवान्। ततः मौनं श्मशानाभिमुखं प्रस्थितवान् च। तदा शवान्तर्गतः बेतालः अवदत्– "अये राजन्! घोरे श्मशानमार्गे तत्रापि मध्यरात्रे दैनन्दिनकार्यं कुर्वन् इव मां वहति खलु भवान्? मम वशीकरणं सर्वथा अशक्यम् इति भावना भवति कदापि न उत्पन्ना वा? केचन स्वसामर्थ्यबाह्यं कार्यं कर्तुम् अपेक्षन्ते। किन्तु सामर्थ्यलोपतः, दूरालोचनायाः अभावतः, मनःपक्वता-राहित्यकारणतः वा ते तत् कार्यं साधयितुं न शक्नुवन्ति। स्वस्य उत्तराधिकारिणः ये सन्ति तेषां द्वारा तत् कार्यं साधयितुं ते प्रयत्नं करिष्यन्ति। किन्तु प्रायः तत्रापि ते

## बेतालकथा



असाफल्यम् एव अनुभवन्ति। धनगुप्तनामकस्य कस्यचित् वणिजः व्यवहारः अत्र उदाहरणम्। धनगुप्तस्य कथां विस्तरेण श्रावयामि। विवेकप्राप्त्यर्थं मार्गायासपरिहारार्थं च तां कथां श्रद्धया शृणोतु तावत्" इति।

अनन्तरं वेतालेन कथा आरब्धा—

पूर्वं भाग्यनगरे धनगुप्तः नाम वणिक् आसीत्। योग्ये स्थले तस्य आपणः आसीत्। आपणस्य पार्श्वे एव तदीयं सुविशालं गृहम् आसीत्। सः वाणिज्येन प्रभूतं धनं सम्पादितवान् आसीत् इति तु सत्यम् एव। किन्तु बन्धुव्यामोहकारणतः सः प्रभूतम् एव धनं व्ययीकृतवान् आसीत्। बान्धवाः बहवः मिथ्याप्रीतिं प्रदर्शयन्तः अविद्यमानं कष्टं सृष्ट्वा वदन्तः च धनगुप्ततः प्रभूतं धनं प्राप्तवन्तः आसन्। बान्धवानां कपटव्यवहारः यावत् ज्ञातः तावता धनगुप्तः वृद्धः जातः आसीत्।

धनगुप्तस्य त्रयः पुत्राः आसन्— आनन्दः, विनोदः, विवेकः चेति। कदाचित् सः त्रीन् अपि पुत्रान् आहूय उक्तवान्— "वत्सा! भवन्तः त्रयः अपि वाणिज्ये समर्थाः एव। किन्तु वाणिज्यजीवने प्रगतिः साधनीया चेत् वाणिज्यचातुर्येण सह स्वहितचिन्तनबुद्धिः अपि आवश्यकी भवति। स्वहितचिन्तनं मम जीवने प्रधानं न आसीत् इत्यतः अहं बान्धवैः बहुधा वञ्चितः अभवम्। येन मया कोट्यधीशेन भवितव्यम् आसीत् सोऽहम् इदानीं लक्षाधीशमात्रम् अस्मि। तत्रापि भवतां साहाय्यम् अपि आसीत्। इदानीं मया विवेकः प्राप्तः अस्ति। किन्तु वृद्धः जातः अस्मि। इच्छा अस्ति चेदपि किमपि कर्तुं न शक्नोमि। अतः मम काञ्चित् अपेक्षां पूरयेयुः वा भवन्तः?" इति।

तदा त्रयः अपि एकस्वरेण उक्तवन्तः— "तात! वणिजा स्वहितचिन्तनम् अपि करणीयम् एव इति वयम् अपि जानीमः स्म। किन्तु भवद्विषयकगौरवस्य कारणतः वयं सर्वं पश्यन्तः अपि मौनम् आश्रितवन्तः। भवान् अनुभववान् वणिक् इत्यतः भवतः व्यवहारे अनौचित्यप्रदर्शनं न उचितम् इति मत्वा वयं

किमपि न उक्तवन्तः। तदस्तु, भवान् स्वस्य अपेक्षां प्रकटयतु तावत्। प्राणान् समर्प्य वा वयं तां पूरयिष्यामः एव'' इति।

पुत्राणां वचनतः सन्तुष्टः धनगुप्तः उक्तवान्– ''योग्याः पुत्राः भवन्तः। भवतां प्राप्त्या अहं धन्यः जातः। मम वाणिज्ये विशेषप्रगतिः न जाता यत् तत्र एतत् गृहम् एव कारणम् इति जनाः वदन्ति। मया यत् आर्जितं तेन धनेन एतत् गृहं निर्मितवान् अहम्। अतः एतस्य गृहस्य विषये विशेषादरः मम। किन्तु अत्र स्थलदोषः अस्ति, स च दोषः एव प्रगतिं निवारयति इति वदन्ति केचन। स्वहितचिन्तनं न कृतं यत् तदेव प्रगतेः अवरोधकं जातम् इति मम चिन्तनम्। केचन स्वार्थसाधकाः एतस्य गृहस्य विषये मयि अनादरम् उत्पाद्य अल्पेन मूल्येन एतत् क्रेतव्यम् इति चिन्तयन्तः सन्ति। अतः स्थलदोषः अत्र नास्ति इति निरूपणीयं मया। यदि अहं कोट्यधीशः भवेयं तर्हि स्थलदोषः अत्र नास्ति इत्येतत् प्रमाणितं भविष्यति। अतः भवत्सु कश्चित् मां कोट्यधीशं कर्तुं शक्नुयात् वा?'' इति।

''आवां करिष्यावः'' इति उक्तवन्तौ विनोदः आनन्दः च। तदा विवेकः उक्तवान्– ''तात! आत्मना दोषः कृतः इति ज्ञात्वा अपि आत्मनः व्यवहारे परिवर्तनम् आनेतुं न शक्तवान् भवान्। बान्धवानां वचनं दाक्षिण्यवशात् निराकर्तुं न शक्नोति भवान्।




अतः वाणिज्यतः भवतः निवृत्तिः एव वरम्'' इति।

धनगुप्तः अङ्गीकारपूर्वकं शिरः चालितवान्। तदा विवेकः पुनः उक्तवान्– ''वाणिज्यं यदि एकस्यैव अधीनं स्यात् तर्हि वरं भवेत्। अतः अस्मासु यः समर्थः तस्मै वाणिज्यं ददातु भवान्। एकस्मै वाणिज्यं दत्तं चेत् अन्ययोः मनसि असूया-कलहबुद्ध्यादिकम् उत्पद्येत इति भीतिः सर्वथा मास्तु भवतः। भवतः निर्णयं सन्तोषेण स्वीकरिष्यामः वयम्'' इति।

धनगुप्तः एतदपि अङ्गीकृत्य क्षणकालं चिन्तयित्वा उक्तवान्– ''वाणिज्ये भवन्तः त्रयः अपि समर्थाः एव। समर्थतमः कः इति



निर्णयः कष्टकरः। अतः भवन्तः एव वदन्तु– कः मम अपेक्षां पूरयितुं शक्नोति इति। तस्मै अहं वाणिज्यं ददामि। अन्ययोः कृते स्वतन्त्रवाणिज्यस्य आरम्भार्थं धनं दास्यामि। एतेन भवत्सु कस्यापि जीवने क्लेशः न भवेत्'' इति।

'स्वतन्त्रतया वाणिज्यस्य आरम्भे क्लेशाः अधिकाः। पित्रा क्रियमाणस्य वाणिज्यस्य निर्वहणं परिवर्धनं च सुकरम्' इति त्रयाणाम् अपि आशयः। अतः 'पितुः वाणिज्यस्य निर्वहणं कस्य भवेत्' इति निर्णेतुं ते न शक्तवन्तः।

तदा धनगुप्तः पुत्रान् उक्तवान्– ''एवं तर्हि अहं भवतः त्रीन् एकं प्रश्नं पृच्छामि। यः योग्यम् उत्तरं ददाति सः मम वाणिज्यस्य उत्तराधिकारी भविष्यति। एवं भवतु वा?'' इति।

त्रयः अपि एतत् अङ्गीकृतवन्तः। तदा धनगुप्तः पृष्टवान्– ''देवः एतत्क्षणे एव भवतां पुरतः यदि प्रत्यक्षः भवेत् तर्हि भवन्तः तं किं प्रार्थयन्ति?'' इति।

''प्रपञ्चे विद्यमानं समग्रं धनं मदधीनं स्यात् इति अहं प्रार्थयामि'' इति उक्तवान् आनन्दः।

''प्रपञ्चस्य धनस्य निर्माता अहम् एव यथा स्यां तथा वरेण अनुगृह्णातु इति अहं प्रार्थयामि'' इति उक्तवान् विनोदः।

विवेकः तु मौनं स्थितवान् आसीत्। अतः धनगुप्तः कुतूहलेन तं पृष्टवान्– ''किं प्रार्थनीयम् इति निर्णेतुं न शक्तं वा भवता?'' इति।

तदा विवेकः हसन्– ''अत्र निर्णेतव्यं चिन्तनीयं वा किम् अस्ति? यदि देवः प्रत्यक्षः भवति तर्हि अहं तदेव पृच्छेयं यत् मानवताप्रियः सज्जनः कश्चित् पृच्छेत्'' इति उक्तवान्।

''वत्स! तन्नाम भवतः आशयः कः इति स्पष्टं वदतु तावत्'' विवेकम् इति उक्तवान् धनगुप्तः।

''अहं मदर्थं किमपि न प्रार्थयामि। प्रपञ्चे स्थिताः सर्वेऽपि सुखेन शान्त्या आरोग्येण च यथा तिष्ठेयुः तथा अनुगृह्णातु कृपया इति

भगवन्तं प्रार्थयामि" इति उक्तवान् विवेकः।

एतत् श्रुत्वा आनन्दः विनोदः च हसितवन्तौ। धनगुप्तः तु तथा न कृतवान्। सः विवेकस्य उत्तरेण नितरां सन्तुष्टः सन् तं प्रीत्या आलिङ्ग्यं स्वकीयं वाणिज्यं तदधीनं कृतवान्।

इदानीं विनोदः आनन्दः च नितराम् आश्चर्यचकितौ।

तदा धनगुप्तः तौ उक्तवान्– "भवतां वाणिज्यसामर्थ्यं ज्ञातव्यम् इति उद्देशेन मया प्रश्नः पृष्टः न आसीत् इति भवन्तौ जानीतः एव। स्वहितचिन्तनं केन प्रकारेण भवन्तः कुर्वन्ति इति ज्ञातुम् इच्छन् अहं प्रश्नं पृष्टवान्। भवतां त्रयाणाम् अपि उत्तरं श्रुत्वा युक्तायुक्ततां निर्णीय एव वाणिज्यं विवेकाधीनं कृतवान् अस्मि। मम निर्णयं भवन्तौ अवश्यम् अङ्गीकरिष्यतः इति अहं विश्वसिमि" इति।

वेतालः एवं कथां समाप्य अवदत्– "अये राजन्! धनगुप्तः वाणिज्ये समर्थः सन् अपि बन्धुव्यामोहकारणतः कोटीश्वरत्वप्राप्तितः वञ्चितः जातः। यत्र गृहं निर्मितं तस्य स्थलस्य दोषस्य कारणतः एवं जातम् इति वदन्तः केचन स्वार्थिनः न्यूनमूल्येन तत् गृहं स्वायत्तीकर्तुं प्रयतमानाः आसन्। तावता धनगुप्तः वृद्धः जातः आसीत्। तथापि कोट्यधीशत्वं प्राप्तव्यम् इति तदीया इच्छा तु न अपगता। समर्थाय स्वहितचिन्तनपराय



विवेकिने उत्तराधिकारिणे वाणिज्यं समर्प्य तद्द्वारा कोट्यधीशत्वं प्राप्तव्यम् इति चिन्तयन् आसीत् सः। किन्तु अन्ते स्वस्य इष्टस्य साधनार्थं तेन यत् कृतं तत् किम् उचितम्? विवेकस्तु स्वहितचिन्तने अनासक्तः। 'समस्तस्य जगतः सुखं शान्तिः आरोग्यं च स्यात्' इति तेन यत् कथितं तदेव अत्र प्रमाणम्। एतादृशः कथं वा प्रभूतं धनं सम्पादयेत्? स्वहितचिन्तनं विना धनसम्पादनं दुष्करम् इति स्वानुभवेन ज्ञात्वा अपि धनगुप्तः किमर्थं वाणिज्यं विवेकाधीनं कृतवान्? धनगुप्तेन महती अविवेकिता खलु प्रदर्शिता? मम एतेषां प्रश्नानाम् उत्तराणि जानन् अपि यदि भवान् न वदेत् तर्हि भवतः शिरः सहस्रधा भग्नं भवेत्" इति।

तदा मौनं स्थातुम् अशक्तः त्रिविक्रमः एवम् उक्तवान्– "मानवाः जीवनार्थं स्वसामर्थ्यस्य अनुगुणं कञ्चित् मार्गम् अवलम्बन्ते। एवं मार्गाः विभिन्नाः भवन्ति इत्यतः तत्तस्य अनुभवः अपि भिन्नः भवति। अनुभवबलात् यः विवेकः प्राप्यते सः अपि भिन्नः भवति। अतः तत्तस्य निर्णयः अपि भिन्नः भवति।

वाणिज्ये निपुणः धनगुप्तः स्वानुभवात् ज्ञातवान् यत् वणिक् स्वहितचिन्तनवान् भवेत् एव इति। पुत्रेषु एषः गुणः कियता प्रमाणेन अस्ति इति ज्ञातुं सः पुत्रान् एकं प्रश्नं पृष्टवान्। आनन्द-विनोदयोः उत्तरं यद्यपि स्वहितचिन्तनद्योतकम् आसीत् तथापि तेन उत्तरेण धनगुप्तः न सन्तुष्टः। यतः तयोः उत्तरं स्वहितचिन्तनं स्फुटं प्रकाशयति स्म। यत्र स्वहितचिन्तनस्य प्रकाशनं भवति तत्र अनादरः ततः अपकीर्तिः च सहजा। मूर्खः यदि स्वहितचिन्तनं कुर्यात् तर्हि तेन हानिः। बुद्धिमान् यदि स्वहितचिन्तनं कुर्यात् तर्हि लाभः। आनन्द-विनोदौ तु परिश्रमं विना एव धनं प्राप्तुम् इच्छतः स्म,। एतादृशाः अल्पे एव काले अन्याय्यमार्गानुयायिनः भवन्ति। विवेकः तु विना परिश्रमं धनं प्राप्तुं न इच्छति स्म। दैवानुग्रहं तु सः इच्छति स्म। दैवानुग्रहतः अन्यैः यावत् प्राप्यते तावदेव स्वनिमित्तम् इच्छति स्म सः। दैवानुग्रहादिकं विना कोट्यधीशत्वं प्राप्तव्यं चेत् परिश्रमः बुद्धिमत्ता च शरणम्। अतः एषः एव मार्गः पुत्रस्य प्रियः इति ज्ञातवान् धनगुप्तः। धनगुप्तः कोट्यधीशत्वं प्राप्तुं तु इच्छति स्म एव। किन्तु सः तदर्थम् अन्याय्यमार्गाश्रयणं न इच्छति स्म। अतः सः वाणिज्यं विवेकाधीनं कृतवान्। एवं सुसूक्ष्मं विचिन्त्य साधकबाधकतां पर्यालोच्य योग्यं निर्णयं कृतवान् अस्ति धनगुप्तः" इति।

एवं वदता त्रिविक्रमेण मौनभङ्गः कृतः आसीत्। अतः शवान्तर्गतः वेतालः ततः अदृश्यः भूत्वा यथापूर्वं वृक्षस्य शाखाम् अवलम्बितवान्।





# अपराधान्वेषणम्

कदाचित् रामशास्त्री नाम कश्चन पण्डितः राजधानीं गतवान् आसीत्। राजास्थाने सः स्वस्य पाण्डित्यं प्रदर्शितवान्। एतेन राजा सन्तुष्टः सन् रामशास्त्रिणे किञ्चित् सुवर्णं रजतं च पुरस्काररूपेण दत्तवान्। राजधानीतः प्रतिगच्छन् रामशास्त्री अग्रजस्य शिवशास्त्रिणः गृहं गतवान्। अग्रजस्य गृहे द्वित्राणि दिनानि स्थित्वा गृहं गन्तव्यम् इति रामशास्त्रिणः विचारः आसीत्।

शिवशास्त्री निर्धनः। सः कष्टेन कुटुम्बपोषणं कुर्वन् आसीत्। अनुजस्य समीपे स्थितं सुवर्णं रजतं च दृष्टवतः शिवशास्त्रिणः मनसि असूया उत्पन्ना। अतः रात्रौ रामशास्त्री यदा निद्रायां मग्नः आसीत् तदा शिवशास्त्री अग्रजसमीपस्थं सुवर्णं रजतं च चोरयित्वा कुत्रापि रहसि स्थापितवान्।

अनन्तरदिने प्रातः उत्थितः रामशास्त्री आभरणस्यूतं सर्वत्र अन्विष्टवान्। किन्तु सः तेन कुत्रापि न दृष्टः। अतः सः आभरणस्यूतचौर्यम् अग्रजं निवेदितवान्।

"हा हन्त! आभरणानि चोरितानि वा? मम गृहे एव एतत् चौर्यं प्रवृत्तम् इति तु महतः खेदस्य विषयः। इदानीं किं करणीयम्? सर्वं नष्टम् अभवत् खलु! अहो, दुर्विधिः!" इति वदन् कृतकाश्रूणि स्रावितवान् शिवशास्त्री।

इदानीं किं करणीयम् इति क्षणकालं चिन्तितवान् रामशास्त्री। अग्रजेन यत् उक्तं तत्र विश्वासः न आसीत् तस्य। अग्रजः एव चौर्यं कृतवान् स्यात् इति चिन्तयति सः। 'चोरितानि आभरणानि प्रतिप्राप्तव्यानि। किन्तु अग्रजस्य चौर्यं प्रकटितं न स्यात्। एतदर्थं कोऽपि उपायः चिन्तनीयः' इति आलोच्य रामशास्त्री ग्रामप्रमुखस्य समीप

"पञ्चविंशतिवर्षेभ्यः पूर्वं चन्दमामायां प्रकाशिता कथा"

गत्वा प्रवृत्तं सर्वं निवेद्य स्वस्य अपेक्षाम् अपि निवेदितवान्।

ततः अनतिकाले एव द्वौ भटौ रामशास्त्रिणं गृहीत्वा तस्य हस्तौ पृष्ठतः नीत्वा बद्धवन्तौ। ग्रामप्रमुखस्य समीपं नीतवन्तौ च। 'अनुजेन कीदृशः घोरः अपराधः कृतः स्यात्?' इति न ज्ञातवान् शिवशास्त्री। सः अपि रामशास्त्रिणम् अनुसरन् ग्रामप्रमुखस्य समीपं गतवान्।

ग्रामप्रमुखः शिवशास्त्रिणम् उक्तवान्– "शास्त्रिवर्य, भवान् तु गौरवान्वितः अस्ति। किन्तु भवतः अनुजः निन्द्यं कार्यं कृतवान् अस्ति। राजभवनतः भवतः अनुजः सुवर्णं रजतं च चोरितवान् इति श्रूयते। सः अस्मद्ग्रामं प्रति आगतः अस्ति इति राजानं कश्चित् निवेदितवान् अस्ति। अतः राजा सूचितवान् यत् अपराधान्वेषणं करणीयम् इति। एतदर्थम् अनन्यगतिकेन मया भवतः गृहस्य परिशोधनं करणीयम्। कृपया क्षन्तव्यः अहम्" इति।

शिवशास्त्री शिरः अवनमय्य स्थितवान्। तदा ग्रामप्रमुखः पुनः उक्तवान्– "भवतः गृहस्य परिशोधनार्थम् अचिरात् एव मम भटाः आगमिष्यन्ति। तदा भवता साहाय्यं करणीयम्। यावत् परिशोधनं न समाप्यते तावत् रामशास्त्री अत्रैव भवतु" इति।

ततः शिवशास्त्री गृहं गतवान्। सुवर्ण-रजतस्यूतम् आनीय रामशास्त्रिणः शय्यायाः अधः स्थापितवान् च। यदा ग्रामप्रमुखस्य भटाः आगताः तदा ते विनायासं सुवर्णस्यूतं प्राप्तवन्तः। तं स्यूतं ते ग्रामप्रमुखाय अर्पितवन्तः च।

ततः अल्पे एव काले रामशास्त्री सुवर्णस्यूतेन सह अग्रजस्य गृहम् आगत्य– "राजा अन्यां वार्तां प्रेषितवान् यत् पूर्वं प्रेषिता वार्ता मिथ्या इति। एतत् सुवर्णं रजतं च पारितोषिकरूपेण प्राप्तम् एव इति प्रमाणितम् अभवत्। अहं निर्दोषी इत्यपि सिद्धम्। अहं मम ग्रामं गच्छामि तावत्" इति उक्त्वा ततः स्वग्रामं गतवान्।



# चन्दमामानुबन्धः–४८




अस्मद्देशीया पशुपक्षिसम्पत्–

# 'पाण्डा' प्राणिनः

बालानां प्रियं क्रीडनकम् अस्ति 'टेड्डी बेयर्', यश्च आस्ट्रेलियादेशीयस्य 'कोला' भल्लूकस्य अनुकृतिः अस्ति। भारते दृश्यमानाः 'पाण्डा' प्राणिनः आकारेण प्रायः 'कोला' भल्लूकसदृशाः एव भवन्ति। भल्लूकस्य इव पाण्डाप्राणिनाम् अपि अल्पं शिरः, अल्पाः पादाः। अतः एव तेषाम् आकृतिः नितराम् आकर्षिका। एतस्य प्राणिनः आ शिरसः समग्रशरीरस्य दैर्घ्यं ६० सें.मी. चेत् पुच्छमात्रस्य दैर्घ्यं तु ८० से.मी. भवति। एतस्य कर्णौ दीर्घौ, तीक्ष्णौ, रूक्षौ आकर्षकौ च। एतस्य पुच्छं वलयितं दृश्यते सदापि। पुच्छस्य वर्णः धूम्रः। शरीरस्य वर्णः कृष्णः। शिरसश्च वर्णः श्वेतः।

उत्तरभारतस्य उन्नतपर्वतप्रदेशेषु निवसन्तः एते प्राणिनः दिने वृक्षशाखासु सुखेन शयानाः रात्रौ आहारान्वेषणार्थं सर्वत्र सञ्चारं कुर्वन्ति। एते वेणोः किसलयानि, रसयुक्तान् गुल्मान्, फलानि, कन्दान् च खादन्ति प्रायः। कदाचित् पक्षिणाम् अण्डानि अपि खादन्ति एते। पक्षिणां ध्वनिम् अनुकुर्वन्तः एते पीष्कारध्वनिम् उत्पादयन्ति। एतेषां शरीरस्य ऊर्णा बहुमूल्या।

भूतपूर्वस्य प्रधानमन्त्रिणः जवहरलालनेहरूवर्यस्य वासस्थानस्य त्रिमूर्तिभवनस्य उद्याने पाण्डाप्राणिनः पालिताः आसन्। नेहरूवर्यः तैः सह तदा तदा क्रीडति स्म अपि।



# आधुनिकं भारतीयसाहित्यम्

*(भारतस्य वैशिष्ट्यं यत् अत्र विभिन्नाः भाषाः विभिन्नाः संस्कृतयः च सन्ति। अत्र विभिन्नासु भाषासु बहोः कालतः समृद्धस्य साहित्यस्य निर्माणं प्रचलति। प्राचीनग्रन्थानां विषये, तन्निरूपितकथावस्तुविषये च वयं किञ्चित् अधिकं वा जानीयाम कदाचित्, किन्तु आधुनिकानां महाग्रन्थानां विषये अत्यल्पम् एव जानीमः। अतः चन्दमामा विभिन्नभाषासु रचितानां कथाग्रन्थानां कथासारम् अत्र परिचाययति। अत्र कथा संक्षेपेण दीयते। तथापि अस्माकं विश्वासः अस्ति यत् एतस्य पठनेन भवन्तः अवश्यं सन्तुष्टाः स्युः इति। यदि शक्यं तर्हि मूलग्रन्थं तदनुवादं वा पठित्वा भारतीयस्य उत्कृष्टसाहित्यस्य स्पष्टं परिचयं प्राप्नुवन्तु इति निवेद्यते।)*

## ताराशङ्करबन्दोपाध्यायस्य 'गणदेवता'



बङ्गालराज्यस्य कश्चन ग्रामः एतस्याः कथायाः नेपथ्ये अस्ति। एतस्याः कथायाः कालः प्रायः १९२०।

शिवपुरनामके ग्रामे निवसन् श्रीहरिः परमस्वार्थी। अन्यान् वञ्चयित्वा वा धनिकत्वं प्राप्तव्यम् इति तस्य प्रबला इच्छा। ग्रामे 'महान् जनः' इति कीर्तिः प्राप्तव्या इति सः इच्छति स्म।

ये विरोधं कुर्वन्ति तेषां विषये अमानुषं व्यवहारं प्रदर्शयति स्म श्रीहरिः। ये तस्य स्वार्थसाधनमार्गे विघ्नम् आचरन्ति तेषां गृहं निर्दयं दहति स्म सः। एवं क्रूरतायाः मूर्तिमत् स्वरूपम् आसीत् सः।

विरोधिनां निग्रहणार्थं रहसि एव क्रूरव्यवहारं करोति स्म श्रीहरिः। किन्तु प्रकटतया तु सज्जनः इव व्यवहरन् सः कष्टग्रस्तानां साहाय्यं करोति स्म। तदा मुग्धाः केचन तस्य प्रशंसां कुर्वन्ति स्म। केचन तस्य वास्तविकं स्वरूपं जानन्तः क्रोधं प्राप्नुवन्तः अपि अनन्यगतिकतया तस्य मिथ्याप्रशंसां कुर्वन्ति स्म। एतया प्रशंसया श्रीहरिः तुष्टः भवति स्म। दुष्टकार्याणि कृत्वा अपि जनानां प्रशंसा प्राप्तुं शक्या इति जानतः तस्य क्रूरकृत्यानि वर्धन्ते स्म।

तस्मिन् एव काले ग्रामे नवचैतन्यतरङ्गाः प्रसृताः। ग्रामस्य लोहकाराः क्षौरिकाः च निर्णीतवन्तः यत् योग्यस्य प्रतिफलस्य प्राप्तिं विना जनानां सेवा न क्रियते इति। एतस्य कारणतः ग्रामे कलहादयः अपि प्रवृत्ताः।



तस्मिन् ग्रामे ये निवसन्ति तेषां जीवनस्तरः सामान्यः आसीत्। किन्तु अपवादरूपेण असामान्याः अपि न आसन् इति न। आसामान्यौ द्वौ आस्ताम् – देवः जगनश्चेति। तयोः देवः अग्रगामी आसीत्। साहसी सच्चारित्र्यवान् चापि आसीत्। देवः अध्यापकवृत्तिम् आश्रित्य जीवति स्म। अपरः जगनः कश्चन वैद्यः आसीत्। समर्पणभावनया जनानां सेवां करोति स्म सः। सदा जनहितम् एव चिन्तयति स्म सः।

कदाचित् भूमेः परिमापनार्थं (सर्वे) केचन सर्वकारीयाः जनाः तं ग्रामम् आगतवन्तः। परिमापनार्थम् आगतेषु कश्चन अधिकारी देवविषये अनादरेण व्यवहृतवान्। देवः एतस्य विरोधं कृतवान्। एतेन सः अधिकारी क्रुद्धः अभवत्। सः देवस्य उपरि मिथ्यादोषम् आरोपितवान्। देवः बन्दी जातः। देवः कारागारे स्थापितः अभवत्।

आंग्लशासनस्य दमननीतिविषये जनानाम् असन्तृप्तिः आसीत् एव। देवस्य बन्धनात् तु जनेषु क्रोधः उद्भूतः। जनाः देवस्य प्रशंसां कुर्वन्तः शासननीतिं निन्दन्तः च कोलाहलं कृतवन्तः।

एकवर्षानन्तरं देवः कारागारात् मुक्तः अभवत्। एतेन ग्रामीणाः सर्वे नितरां सन्तुष्टाः अभवन्। अत्रान्तरे जतिनः नाम कश्चन क्रान्तिकारी युवकः तं ग्रामम् आगत्य वासम् आरब्धवान्। प्राचीनभूस्वामितः समग्रां भूमिं क्रीत्वा श्रीहरिः तस्य ग्रामस्य भूस्वामी जातः आसीत्। या भूमिः कस्यापि अधीना न भवति सा भूमिः भूस्वामिनः भवति स्म। तस्मिन् क्षेत्रे विद्यमानानां वृक्षाणाम् उपयोगे सर्वेषां समानः अधिकारः भवति स्म। नूतनः भूस्वामी एतादृश्यां भूमौ स्थितान् वृक्षान् छेदयितुम् उद्युक्तः अभवत्। तदा जनाः विरोधं कृतवन्तः। कस्मिंश्चित् लघुकलहे देवः व्रणितः अभवत्। रात्रौ कश्चित् श्रीहरेः उद्याने स्थितानि सस्यानि समूलं नाशितवान्। एतत् कार्यं देवेन एव कृतम् इति आरोपं कृतवान् भूस्वामी। अत्रान्तरे लोहकारः अनिरुद्धः अग्रे आगत्य उक्तवान् यत् क्रोधवशात् अहम् एव भूस्वामिनः उद्यानस्य सस्यानि नाशितवान् इति। तदा आरक्षकाः अनिरुद्धं बद्ध्वा नीतवन्तः।

ग्रामे अकस्मात् विषूचिका (कालरा) रोगः प्रसृतः। ग्रामे बहवः मृताः अभवन्। देवः शवदहनकार्ये आत्मानं नियोजितवान्। किन्तु दौर्भाग्यवशात् विषूचिकारोगेण एव तस्य पुत्रः ग्रस्तः सन् प्राणान् अत्यजत्। पत्नी अपि तेनैव रोगेण ग्रस्ता सती दिवं गता। देवः एकाकी जातः। केनचित् कारणेन जतिनः अपि तं ग्रामं परित्यज्य अगच्छत्। मित्रस्य वियोगतः तु देवस्य स्थितिः नितरां शोचनीया जाता।

जीवनं नाम एतादृशम् एव! सर्वतः अपि कष्टानां पातः। प्रतिक्षणं सङ्घर्षः च। 'साधारणानां सुखसन्तोषादीनां प्राप्तेः निमित्तं प्रयत्नकरणस्य अपेक्षया उन्नतं लक्ष्यं मनसि निधाय कष्टपरम्परायाः सम्मुखीकरणेन एव मानवस्य शक्तिः वर्धते' इति सन्देशम् एतस्य ग्रन्थस्य द्वारा निरूपितवान् अस्ति ताराशङ्करबन्दोपाध्यायः। एषः (१८१८-१९७१) वङ्गभाषया अनेकाः कथाः कादम्बरीः च लिखितवान्। 'गणदेवता'नामकस्य ग्रन्थस्य निमित्तं भारतसर्वकारेण १९६७ तमे वर्षे ज्ञानपीठप्रशस्तिः प्रदत्ता।

# भवन्तः जानन्ति वा?

१. प्रपञ्चे नदीमध्यस्थौ द्वौ एव अपूर्ववस्तुसङ्ग्रहालयौ प्रसिद्धौ। तयोः अन्यतरः मिश्रदेशीयः अबूसिम्बल्प्रदेशस्थः। अपरः भारते अस्ति। सः भारते कुत्र अस्ति?

२. कस्यचित् नगरस्य समीपे पर्वतस्य उपरि स्थितं मन्दिरं गन्तुं सहस्रं शिलासोपानानि आरोढव्यानि। तच्च मन्दिरं किम्?

३. सः देशः कः, यश्च पत्रालयमूल्याङ्केषु स्वनाममुद्रणं न करोति?

४. अस्माकं देशस्य राष्ट्रियध्वजस्य श्वेतपट्टिकायां स्थितं चिह्नं किम्?

५. मियन्मार(बर्मा)देशस्य मुद्रा किंनामिका?

६. रेड्क्रास्संस्थायाः व्यवस्थापकस्य नाम किम्?

७. एल्.ई. वाटर्मेन्वर्येण किं वस्तु अन्विष्टम्?

८. सिक्खजनानां नवमगुरोः नाम किम्?

९. कलाविदा अमीरखुस्रोवर्येण किं वाद्यम् उपयुज्यमानम् आसीत्?

१०. भारतस्य किं राज्यम् अत्यधिकं भल्लातकं विदेशान् प्रति प्रेषयति?

११. ईफिल् टावर् कुत्र अस्ति? तस्य निर्माणं केन कृतम्?

१२. डा. साम्युयल् जान्सन्वर्यस्य जीवनचरित्रं केन लिखितम्?

१३. भारतीयानि अतिप्राचीनानि नाणकानि कदा आसन्?

१४. कारागारे तिष्ठन् निराहारव्रतेन मरणं प्राप्तवान् भारतीयदेशभक्तः कः?

१५. "आपरेशन् फ्लड्" इत्यस्य किं तात्पर्यम्?

# उत्तराणि

१. आन्ध्रप्रदेशे। नागार्जुनकोण्ड इति तस्य नाम।

२. मैसूरुसमीपस्थं चामुण्डीमन्दिरम्।

३. ग्रेट् ब्रिटन्।

४. अशोकचक्रम्।

५. क्यात् इति।

६. जान् हेन्री ड्यूरण्ट्।

७. फौण्टन् पेन्।

८. गुरुतेगबहदूर् इति।

९. मरंद्नामकं वाद्यम्।

१०. केरलराज्यम्।

११. प्यारिस्नगरे (फ्रान्स्देशे)। ९८५ द्वादशाङ्गुलोन्नतस्य एतस्य निर्माणं १८८७-८९ अभ्यन्तरे गुस्तव् ईफिल्वर्येण कृतम्।

१२. जेम्स् बास्वेल्।

१३. क्रि.पू. ५ शतके।

१४. जतिन् दास्।

१५. क्षीरोत्पादनं वर्धनीयम् इति। एतदेव 'श्वेतक्रान्तिः' इति निर्देष्टुं शक्या।



# महामेधावी

चन्द्रधरः नाम कश्चन बुद्धिमान् युवकः पूर्वम् आसीत्। सः बाल्यतः एव महामेधावी आसीत्। तारुण्ये तु चन्द्रधरस्य मेधाविता इतोऽपि प्रसिद्धा जाता। आत्मानं मेधाविनं भावयन्तं पुत्रं पिता कदाचित् उक्तवान्– "अस्माकं ग्रामे मेधावी नाम सदानन्दः एव। अतः यदि सः भवन्तं मेधाविनं वदेत् तर्हि भवतः मेधाविता प्रमाणिता भवेत्" इति।

चन्द्रधरः सदानन्देन मिलितवान्। सदानन्दः विविधैः प्रश्नैः चन्द्रधरं परीक्ष्य उक्तवान्– "भवतः ज्ञानवत्ता, स्मरणशक्तिः च अपूर्वा एव। ग्रामज्येष्ठान् सम्मेल्य सर्वेषां पुरतः आवां वादं करवाव। वादे प्रायः भवतः एव विजयः भवेत्" इति।

एतत् श्रुत्वा चन्द्रधरः सन्तोषसागरे निमग्नः। सः गृहं गत्वा पितरं प्रवृत्तं सर्वं निवेदितवान्। तदा पिता उक्तवान्– "वत्स! प्रायः पण्डिताः अन्यस्य पाण्डित्यं न सहन्ते। अतः वादसमये जागरूकता भवतु" इति।

किन्तु चन्द्रधरः पितुः उपदेशं तृणाय अमन्यत। 'मेधावी सन् सदानन्दः स्वस्य पराजयस्य आशङ्कां प्रकटितवान् इत्यतः वादे ममैव जयः स्यात्' इति चिन्तयन् निश्चिन्ततया स्थितवान् चन्द्रधरः।

मेधाविनोः वादं श्रोतुं ग्रामजनाः महता उत्साहेन वादस्थलम् आगतवन्तः। युक्ते समये सदानन्दः चन्द्रधरः चापि वेदिकाम् आरुह्य जनान् अभिवन्द्य स्वस्थाने उपविष्टवन्तौ।

सदानन्दः चन्द्रधरम् उक्तवान् यत् प्रथमं भवान् एव प्रश्नं पृच्छतु इति। तदा चन्द्रधरः पृष्टवान्– "सूर्यस्य तेजसः मूलं किम्?" इति।

तदा सदानन्दः उक्तवान्– "यदि एतं प्रश्नम् अत्रत्यान् जनान् पृच्छेम तर्हि सम्मिलितेषु एकैकः अपि ऊहया एकैकम्

उत्तरं दद्यात्। किम् उत्तरम् उचितम् इति प्रत्यक्षं दृष्ट्वा वयं निर्णेतुं न शक्नुमः। यतः सूर्यः तेजोमयः। यः तस्य समीपं गच्छति सः भस्मीभविष्यति। यदि शास्त्रप्रक्रियाम् आश्रित्य सूर्यस्य तेजसः मूलं निरूप्येत तर्हि आवां द्वावेव तत् अवगन्तुं शक्नुयाव, न तु अत्र उपस्थिताः सर्वे। अतः सम्मिलितानां बुद्धिगम्यः प्रश्नः प्रष्टव्यः आसीत् भवता। अल्पम् एतम् अंशम् अपि अजानन् कीदृशः मेधावी भवान्?" इति।

एतस्य उत्तरं किं वक्तव्यम् इति न ज्ञातवान् चन्द्रधरः। अतः सः सदानन्दम् उक्तवान्– "अस्तु तावत्, इदानीं भवान् एव एकं प्रश्नं पृच्छतु" इति।

तदा सदानन्दः पृष्टवान्– "चन्द्रस्य कान्तेः मूलं किम्?" इति।

एतत् श्रुत्वा हसन् उक्तवान् चन्द्रधरः– "श्रीमन्! अत्र सम्मिलितानां बुद्धिगम्यः प्रश्नः एव प्रष्टव्यः इत्यंशः भवता अपि स्मर्तव्यः खलु?" इति।

तदा सदानन्दः सोपहासं हसन्– "मित्र! किं भवान् भावयति यत् अस्माकं ग्रामीणाः सर्वे बुद्धिहीनाः इति? चन्द्रः सूर्यकिरणानां संस्पर्शात् कान्तियुक्तः दृश्यते इति च अस्माकं ग्रामस्य सर्वे जनाः जानन्ति एव" इति उक्त्वा सम्मिलितेषु कांश्चन पृष्टवान्– "किं भवन्तः एतत् न जानन्ति?" इति।

एवं सः यदा पृष्टवान् तदा एकैकः अपि 'अहं जानामि' इति भावं शिरश्चालनपूर्वकं



प्रदर्शितवान्। तदा चन्द्रधरः कोपेन उक्तवान्– "स्वयं समग्रं विवरणम् उक्त्वा प्रश्नः पृष्टः चेत् को वा शिरश्चालनं न कुर्यात्? वञ्चनाव्यवहारः भवतः" इति।

"तन्नाम अस्माकं ग्रामे निवसन्तः सर्वे शिरश्चालनमात्रं जानन्तः मन्दमतयः इति वा भवतः आशयः? अहं बुद्धिमान् इति गर्वः यदा शिरसि प्रविशति तदा जनाः चिन्तयन्ति यत् जगत् एव मूर्खतायुक्तम् इति। भवतः अपि तादृशी एव स्थितिः" इति चन्द्रधरम् उक्त्वा सम्मिलितान् उद्दिश्य उक्तवान् सदानन्दः– "पश्यन्तु भवन्तः। एतस्य चन्द्रधरस्य बुद्धिमत्ता स्यात् कदाचित्। किन्तु तस्य विभूषणं विनयः तु सर्वथा नास्ति। एतस्य एतावान् गर्वः यत् अहम् एकः एव बुद्धिमान्, अन्ये सर्वे बुद्धिहीनाः इति। गर्वोन्मत्तः एषः मया सह वादार्थम् आगतः। अहो धाष्ट्र्यम्! अहो अविवेकिता!" इति।

ग्रामीणाः चन्द्रधरस्य व्यवहारं विमृशन्तः, अविनयं निन्दन्तः च ततः गतवन्तः। एतया घटनया चन्द्रधरः नितराम् अपमानितः जातः।

यदा चन्द्रधरः गृहं प्रत्यागतः तदा पिता उक्तवान्– "वत्स! मम वचनं तृणीकृतं यत् तस्य फलम् एतत्। प्रतिस्पर्धी यदा प्रहरति तदा आत्मरक्षणोपायः प्रतिप्रहारचातुर्यं वा आश्रयणीयम्। किन्तु भवान् तादृशीं कलां न ज्ञातवान्। अतः पराजयः जातः" इति।

तदा चन्द्रधरः कोपेन उक्तवान्– "सदानन्दः एतादृशं निन्द्यं व्यवहारं कुर्यात्



इति न निरीक्षितम् आसीत्। सः अद्य मम अपमाननं यथा कृतवान् तथैव अहम् अपि तस्य अपमाननं करिष्यामि। एतत् एव मम जीवनस्य लक्ष्यं भविष्यति'' इति।

तस्मात् दिनात् आरभ्य चन्द्रधरः सदानन्दस्य दोषाणाम् अन्वेषणे मग्नः अभवत्। सदानन्दस्य वचनेषु, व्यवहारे, चिन्तने च कानिचन दौर्बल्यानि दृष्टानि तेन। तानि सर्वान् वदन् तेषां दौर्बल्यानां विशेषप्रचारं कृतवान् चन्द्रधरः।

ग्रामीणाः केचन सदानन्दसमीपं गत्वा तद्विषये चन्द्रधरेण यद्यत् उच्यते तत्सर्वं निवेदितवन्तः। तदा तान् उक्तवान् सदानन्दः– ''चन्द्रधरः बुद्धिमान् एव। यदि मयि विद्यमानान् दोषान् सः अन्विष्य प्रकाशयेत् तर्हि तेन मम लाभः एव। आत्मानं परिष्कर्तुं मम उत्तमः अवकाशः। मयि अविद्यमानान् दोषान् यदि सः आरोपयेत् तर्हि जनाः तद्विषये अगौरवं प्रकटयन्ति। अतः उभयथा अपि हानिः नास्ति मम'' इति।

ग्रामीणानां गमनानन्तरं तदीया पत्नी उक्तवती– ''एषा शान्तचित्तता यदि भवता पूर्वम् एव प्रकाशिता स्यात् तर्हि चन्द्रधरः भवतः शत्रुः न अभविष्यत्। भवान् सर्वेषां पुरतः बुद्ध्या तस्य अपमाननं कृतवान्। अतः सः भवतः शत्रुः जातः।'' इति।

तदा सदानन्दः मन्दहासपूर्वकं पत्नीम् उक्तवान्– ''अये मन्दमते, मया बुद्ध्या एव चन्द्रधरस्य अपमाननं कृतं, तस्य कोपः वर्धितः च। मम ग्रामे माम् अतिरिच्य कोऽपि मेधावी न स्यात् इति मम अपेक्षा। मानवः यदा आवेशवशं गच्छति तदा तदीयः विवेकः नश्यति। आवेशः मानवं मूर्खं करिष्यति। अतः अहं चन्द्रधरं कोपयित्वा तस्मिन् आवेशम् उत्पादितवान्। इतः परं सः मूर्खतापरम्पराम् एव आचरन् मयि दोषम् अन्वेष्टुम् एव स्वप्रतिभां व्ययीकुर्वन् जीवति। माम् अतिरिच्य वर्धितुं सर्वथा न प्रयतते सः। अतः मेधाविताकीर्तिः मम अबाधिता स्थास्यति'' इति।






# वैद्यस्य धाष्ट्यम्

मधुपुरनामके ग्रामे श्वेतकेतुः नाम कश्चन वैद्यः आसीत्। सः व्याधीनां चिकित्सायां सिद्धहस्तः आसीत्। यस्य व्याधेः निवारणे अन्ये वैद्याः असमर्थाः आसन् तादृशान् बहून् व्याधीन् निवारितवान् आसीत् श्वेतकेतुः।

सः ग्रामः यस्मिन् देशे भवति तस्य देशस्य राजा कदाचित् घोरव्याधिना पीडितः अभवत्। राजवैद्याः बहुविधाः चिकित्साः कृतवन्तः। किन्तु राज्ञः व्याधिः तु न शान्तः, प्रत्युत दिने दिने अवर्धत।

एतस्मिन् एव काले राज्ञा श्वेतकेतोः नाम श्रुतम्। श्वेतकेतोः वार्तां श्रुत्वा निराशया हसन् राजा मन्त्रिणम् उक्तवान्– "बहुभिः वैद्यैः चिकित्सा कृता एव। किन्तु प्रयोजनं किमपि न सिद्धम्। तथापि तमपि वैद्यम् आनाययतु तावत्। फलं सिध्येत् वा न वा, प्रयत्नः तु करणीयः एव" इति।

मन्त्री श्वेतकेतुम् आनेतुं शिबिकासहितान् भटान् प्रेषितवान्। भटाः श्वेतकेतोः गृहं गत्वा राज्ञः निमन्त्रणं निवेदितवन्तः।

किञ्चित्कालं चिन्तयित्वा श्वेतकेतुः भटप्रमुखम् उक्तवान्– "क्षम्यताम्। अहं राजधानीं न आगच्छामि। यदि मम चिकित्सायां राज्ञः विश्वासः स्यात् तर्हि सः एव अत्र आगच्छतु नाम। मम एतम् आशयं राजानं निवेदयन्तु भवन्तः" इति। भटाः राजधानीं प्रतिगत्य राजानं सर्वं निवेदितवन्तः।

तत्समये तत्रैव उपस्थितः सेनापतिः एतत् श्रुत्वा क्रोधेन– "किम् एतत्? सामान्यानां मूलानाम् अन्वेषणं कृत्वा चिकित्सां कुर्वतः ग्रामीणस्य सामान्यवैद्यस्य एतावान् गर्वः वा! महाराजस्य निमन्त्रणं तिरस्कुर्वतः तस्य कियत् धाष्ट्यं स्यात्? महाराज! अनुज्ञां ददातु



यावत्। तं बद्ध्वा भवतः पुरतः उपस्थापयिष्यामि'' इति उक्तवान्।

किन्तु राजा शान्तस्वरेण उक्तवान्– ''सेनापतिवर्य! सामान्यसस्येषु स्थितम् औषधगुणम् अभिज्ञाय समर्थतया चिकित्सां कुर्वतः तस्य वैद्यस्य प्रशंसा करणीया अस्माभिः। अहम् अद्यैव तस्य वैद्यस्य ग्रामं प्रति प्रस्थातुम् इच्छामि। एतदर्थं योग्या व्यवस्था भवतु'' इति।

राजा सपरिवारं वैद्यस्य श्वेतकेतोः ग्रामं प्रति प्रस्थितवान्। ग्रामात् बहिः सुविशाले स्थले राज्ञः वसतिव्यवस्था उपकल्पिता आसीत्। राजा तत्र वासं कृतवान्।

सेनाधिपतिः श्वेतकेतोः गृहं गत्वा पृष्टवान्– ''वैद्यमहाशय! राजा भवतः ग्रामसमीपे वसति। इदानीं भवान् तस्य समीपं गच्छति, उत राज्ञा एव भवतः गृहस्य द्वारस्य समीपम् आगन्तव्यम्?'' इति।

सेनाधिपतेः वचने उपहासः स्फुटः आसीत्। तथापि वैद्यः श्वेतकेतुः खेदं कोपं वा अप्रदर्शयन् महाराजस्य वसतिं गतवान्। राजानं विनयेन नमस्कृत्य विविधैः प्रश्नैः रोगस्वरूपं ज्ञात्वा औषधं यच्छन् सः उक्तवान्– ''प्रभो, व्याधिशान्त्यर्थम् औषधसेवनं यथा तथा पथ्याचरणम् अपि अनिवार्यम्। अतः कानिचन दिनानि भवता पथ्यम् आचरणीयम्'' इति।

राजा एतत् अङ्गीकृतवान्। ततः श्वेतकेतुः विविधानि मूलानि सङ्गृह्य औषधं निर्माय राज्ञे दत्तवान्। सप्ताहाभ्यन्तरे व्याधेः उपशमनं दृष्टम्। ततः सप्ताहाभ्यन्तरे राजा नीरोगः आसीत्।

राजा श्वेतकेतोः प्रशंसां कुर्वन्– ''वैद्यवर्य! चिकित्सायां भवतः सामर्थ्यम् अपूर्वम्। नितराम् उपकृतः अस्मि अहम्। भवान् यावत् धनम् इच्छति तावत् दातुं सिद्धः अहम्। मया कियत् धनं दातव्यम् इति वदतु तावत्'' इति उक्तवान्।

तदा श्वेतकेतुः विनयेन उक्तवान्– ''प्रभो, परम्पराप्राप्ता भूमिः अस्ति मम। ततः यावत् प्राप्यते तावत् मम जीवनार्थं पर्याप्तं भवति। अतः चिकित्सायाः

प्रतिफलरूपेण अहं कस्माच्चित् अपि किमपि न स्वीकरिष्यामि। अतः भवत्तः धनं न इच्छामि अहम्। यदि प्रतिफलदानेच्छा भवतः तीव्रा स्यात् तर्हि मम काञ्चित् इच्छां पूरयतु भवान्'' इति।

''का सा इच्छा भवतः?'' इति आश्चर्येण पृष्टवान् राजा।

''अस्मद्ग्रामं प्रति आगमनसमये भवता शिबिकायाम् उपविष्टम् आसीत्। अतः प्रतिगमनसमये भवान् रथे उपविश्य गच्छतु इति प्रार्थना मम। शक्यं चेत् मम एताम् इच्छां पूरयतु'' इति निवेदितवान् श्वेतकेतुः।

अनन्तरं सः राज्ञे एकं पत्रं यच्छन् उक्तवान्– ''प्रभो, मम व्यवहारे किमपि अनौचित्यं दृष्टं चेत् कृपया अहं क्षन्तव्यः। रथेन एव गन्तव्यम् इति मया किमर्थम् उक्तम् इति भवता राजधानीप्राप्तितः पूर्वं ज्ञायेत। यदि न ज्ञातं तर्हि कृपया राजधानीं गत्वा मया दत्तं पत्रं पठतु'' इति।

राजा सेनापतिः च रथे उपविश्य राजधानीं प्रति प्रस्थितवन्तौ। स च मार्गः सर्वथा असमीचीनः आसीत्। निम्नोन्नतता, गर्ताः, शिलाः च मार्गे प्रभूतम् आसन्। एतत्सर्वं दृष्ट्वा सेनाधिपतिः कोपेन राजानम् उक्तवान्– ''महाराज! तस्य वैद्यस्य धाष्टर्यं दृष्टं खलु भवता? महाराजम् अपि भवन्तं सः चिकित्सार्थं स्वगृहसमीपम् आनायितवान्। इदानीम् असमीचीने एतस्मिन् मार्गे रथेन गन्तव्यम् इति उक्त्वा भवन्तं पीडितवान् अस्ति। तत् पत्रं मह्यं ददातु। तत्र किं



लिखितम् अस्ति इति इदानीम् एव पठामि तावत्'' इति।

तदा राजा शान्तस्वरेण उक्तवान्– ''किं पत्रपठनेन? तत्र किं लिखितम् अस्ति इति अपठनेन एव ज्ञातम् अस्ति मया'' इति।

राजा राजधानीं प्राप्य मन्त्रिणम् आहूय आज्ञापितवान्– ''मधुपुरप्रदेशस्य प्रतिनिधिम् अविलम्बेन अत्र आनाययतु। तस्य प्रदेशस्य मार्गाणां सुव्यवस्थार्थं यत् धनं दत्तं तत् केन रूपेण व्ययितम् इति विवरणं प्राप्नोतु। अनन्तरं सर्वं विवरणं मह्यं ददातु'' इति।

अनन्तरं सः सेनाधिपतिम् उक्तवान्– ''वैद्यः श्वेतकेतुः बुद्धिमान् कोमलहृदयः च। तस्य ग्रामस्य मार्गस्य निर्माणे या वञ्चना प्रवृत्ता तां निवेदयितुं प्रयत्नं कृतवान् सः। गमनसमये मया एतद्विषये अवधानं न दत्तम्। अतः प्रतिगमनसमये रथेन गन्तव्यम् इति प्रार्थितवान् सः। अस्तु, पत्रे किं लिखितम् इति पठतु तावत्'' इति।

सेनाधिपतिः पत्रम् उद्घाटितवान्। पत्रे एवं लिखितम् आसीत्– ''प्रभो, प्रयाणसमये यत् असौविध्यं जातं तदर्थं क्षमां प्रार्थये। मत्समीपम् आगच्छतां रोगिणां प्रयाणकालिकं कष्टं भवान् जानातु इति मया एवं कृतम्। यदि एतेन मम प्रयत्नेन प्रजानां हितं सिद्ध्येत् तर्हि आत्मानं धन्यं मन्ये'' इति।

पत्रं पठित्वा आश्चर्यम् अनुभवन्तं सेनाधिपतिम् उक्तवान् राजा– ''लोकहितार्थं कदाचित् केचन धाष्ट्यं प्रदर्शयन्ति। निवेदनादिना अपि यदा कार्यं न सिद्ध्यति तदा अल्पं धाष्ट्यं प्रदर्शितं चेत् अनौचित्यं किमपि नास्ति खलु तत्र? राजप्रतिनिधौ अधिकः विश्वासः प्रदर्शितः मया। परीक्षा तु न कृता एव। इदानीं विवेकः प्राप्तः मया'' इति।

ततः मासाभ्यन्तरे राजधानी-मधुपुरमार्गः उत्तमः जातः। वैद्यं द्रष्टुम् आगच्छतां जनानां सौकर्यार्थं मार्गपार्श्वे तत्र तत्र धर्मशालाः अपि निर्मिताः।






परमदुःखसागरे निमग्नः रामः विभीषणेन किम् उक्तम् इति न ज्ञातवान् एव। किञ्चित्कालानन्तरं सः आत्मनः दुःखं निगृह्य विभीषणम् उक्तवान्– "मित्र, विभीषण! इदानीं भवता किमपि उक्तं खलु? दुःखावेगवशात् मया किमपि न अवगतम्। अतः तत् इदानीं पुनरपि वदतु तावत्" इति।

तदा विभीषणः पुनः उक्तवान्– "भवान् विना कारणं दुःखम् अनुभवन् अस्ति। अस्मासु अपि दुःखम् उत्पादयन् अस्ति। भवतः दुःखं दृष्ट्वा शत्रवः सन्तोषम् अनुभवन्तः सन्ति। राक्षसानां संहारः सीतायाः प्रतिप्राप्तिः च भवतः उद्देशः खलु? एवं तर्हि विना विलम्बं युद्धम् अनुवर्तताम्। सेनासमेतं लक्ष्मणम् इदानीम् एव निकुम्भिळायागभूमिं प्रति प्रेषयतु। इन्द्रजित् इदानीं तत्र यागं कुर्वन् अस्ति। यदि तस्य यागः निर्विघ्नं परिसमाप्येत तर्हि अस्माकं सर्वेषां मरणं निश्चितम्। तादृशम् अपूर्वं वरं सः ब्रह्मणः सकाशात् प्राप्तवान् अस्ति। यः तस्य निकुम्बिळायागे विघ्नम् उत्पादयति ततः एव इन्द्रजितः मरणं भविष्यति। इन्द्रजित् मृतः चेत् रावणः नितराम् असहायः भविष्यति। लक्ष्मणः तु व्रतनिष्ठः अस्ति। यदि भवतः अनुज्ञाबलम् अपि तेन युक्तं भवेत् तर्हि इन्द्रजितः अन्तकालः सन्निहितः इत्येव मन्तव्यम्। अतः अविलम्बेन लक्ष्मणं युद्धार्थं प्रेषयतु" इति।

'इन्द्रजितं संहृत्य विजयी सन् आगच्छतु'

२९. इन्द्रजितः मरणम्।



इति लक्ष्मणम् उक्तवान् रामः। लक्ष्मणम् अनुसृत्य गन्तुं वानरसेना भल्लूकसेना च सज्जीकृता। विभीषणः मार्गम् उपदिशन् अग्रे गतवान्। वानरसेना अग्रे गता। लक्ष्मणम् अनुसृत्य हनूमान् अपि गतवान्।

प्रस्थानसमये लक्ष्मणः सुवर्णमयानि अलङ्काराणि धृत्वा कवचधनुर्बाणादीन् गृहीतवान् आसीत्। विभीषणः अपि धनुः गृहीतवान् आसीत्। ते यदा निकुम्भिळायागस्थलं गताः तदा व्यूहं विरचय्य स्थिता राक्षससेना दूरात् एव दृष्टा।

विभीषणः लक्ष्मणाय राक्षससेनां प्रदर्श्य– "इन्द्रजितः यागस्य समाप्तितः पूर्वम् एव एतं व्यूहं विभिद्य अग्रे गत्वा इन्द्रजितः संहारः करणीयः। अतः भवान् प्रथमम् अग्रे गत्वा व्यूहस्य भेदनं करोतु। इन्द्रजित्समीपं गच्छतु च। दिव्यास्त्राणां प्रयोगेण तस्य संहारम् अपि करोतु" इति उक्तवान्।

ततः वानराः भल्लूकाः च उच्चैः नादं कृतवन्तः। राक्षसाः अपि प्रतिनादं कृत्वा युद्धोत्साहं प्रदर्शितवन्तः। अनन्तरं राक्षस-वानरसेनयोः युद्धम् आरब्धम्।

विभीषणः लक्ष्मणः च राक्षसान् दूरीकुर्वन्तौ अग्रे गतवन्तौ। दूरात् एव ताभ्यां कश्चन महावृक्षः दृष्टः। तं वृक्षं प्रदर्शयन् लक्ष्मणम् उक्तवान् विभीषणः– "तस्य कृष्णवर्णीयस्य वृक्षस्य अधः एव इन्द्रजित् होमं कुर्वन् अस्ति। भूतबलिं समर्प्य सः यागं समापयति। यागः समाप्तः चेत् सः अदृश्यतां प्राप्य सर्वान् संहरिष्यति। अतः अस्माभिः इदानीं तस्य वृक्षस्य समीपं गन्तव्यम्" इति।

एतत् श्रुत्वा लक्ष्मणः धनुः गृहीत्वा महावृक्षस्य समीपं गत्वा स्थितवान्। वानरभल्लूकादयः तम् अनुसृत्य गतवन्तः।

अत्रान्तरे युद्धं कर्तुम् आगतं लक्ष्मणं दृष्ट्वा क्रुद्धः इन्द्रजित् रथम् आरुह्य अग्रे आगतवान्। राक्षसाः ऋत्विजः इतोऽपि आहुतीः अर्पयन्तः एव आसन्।

लक्ष्मणः उग्रस्वरेण इन्द्रजितम् उक्तवान्– "भवता सह युद्धं कर्तुम् आगतवान् अस्मि। अतः सन्नद्धः भवतु" इति।

लक्ष्मणं कोपेन पश्यतः इन्द्रजितः दृष्टिः पार्श्वे स्थितस्य विभीषणस्य उपरि पतिता। सः महता क्रोधेन विभीषणं पश्यन्– "अये कुलद्रोहिन्! भीरो, राक्षसकुले जातः अपि भवान् कुलहितं विस्मृत्य राक्षसानां संहारार्थं प्रयत्नं कुर्वन् अस्ति। एतत् भवतः जन्मस्थलम्। मम पिता भवतः भ्राता। एवं स्थिते अपि अस्मान् विरुध्य युद्धं कुर्वन् अस्ति खलु? धिक् भवन्तम्। कुलधर्मं परित्यज्य स्नेहितान्, आत्मीयान्, कुलबान्धवान् च संहर्तुम् उद्युक्तः नीचः भवान्। अविवेकी भवान् शत्रूणां दासः जातः अस्ति। कुलबान्धवाः भवन्तं निन्दन्ति। सज्जनाः भवन्तं धिक्कुर्वन्ति। शत्रूणां स्नेहः न स्थिरः। यावत् इष्टसिद्धिः तावत् शत्रवः भवता सह स्नेहेन व्यवहरन्ति। अनन्तरं भवन्तं तृणीकुर्वन्ति। मम यागस्य रहस्यं जानन् लक्ष्मणं युद्धार्थं प्रेरितवान् भवान् एव। बन्धुहितनाशकम् एतादृशं कृत्यं कोऽपि विवेकी कर्तुं न अर्हति। धिक् भवन्तम्। धिक् भवतः विवेकम्" इति बहुधा निन्दितवान्।

एतत् सर्वं श्रुत्वा अपि अविचलः विभीषणः उक्तवान्– "अये, अलं व्यर्थभर्त्सनेन। अहं सदा धर्मपक्षपाती इति भवान् जानाति एव। मया सम्यक् बोधिते अपि भवतः पिता अधर्ममार्गं न परित्यक्तवान्। अन्ते अनिवार्यतया मया धर्ममार्गावलम्बी रामः आश्रितः। भवतः पिता स्वस्य दुष्कृत्यस्य फलं स्वयम् अनुभवन् अस्ति। पितुः पक्षम् अवलम्बतः भवतः नाशः निश्चितः।





मरणसमीपे स्थितस्य निन्दनेन किम्? मायासीतां संहरन् भवान् रामलक्ष्मणयोः अपमाननं कृतवान्। रामं लक्ष्मणं वा धिक्कृत्य लोके को वा जीवेत्? भवतः अन्तिमक्षणाः सन्निहिताः। अचिरात् एव यमलोकस्य अतिथिः भविष्यति भवान्" इति।

इन्द्रजित् लक्ष्मणं दृष्ट्वा उक्तवान्– "अये, मां युद्धार्थम् आह्वयतः भवतः कियत् धार्ष्ट्यम्? ह्यः रात्रौ मम पराक्रमः अंशतः भवता दृष्टः आसीत् खलु? तदा अनुभूतः पराजयः किं विस्मृतः? अथवा विनाशकालीना विपरीतबुद्धिः प्राप्ता वा? यदि प्राणाः प्रियाः स्युः तर्हि इतः निर्गच्छतु" इति।

"अये, किं प्रलपनेन? भीरवः बहुधा जल्पन्ति। वीराः च शस्त्रैः उत्तरं यच्छन्ति। यदि भवान् वीरः स्यात् तर्हि युद्धार्थं सन्नद्धः भवतु" इति उक्तवान् लक्ष्मणः।

इन्द्रजित् धनुषि बाणान् संयोज्य निरन्तरं बाणवर्षणं कृतवान्। लक्ष्मणस्य शरीरं रक्तसिक्तं जातम्। लक्ष्मणः अपि बाणप्रयोगं निरन्तरं कृतवान्। इन्द्रजित् अपि व्रणितः जातः। एवं व्रणितौ अपि तौ उभौ निरन्तरं युद्धं कुरुतः। लक्ष्मणस्य केचन बाणाः राक्षसऋत्विजः अधः अपातयत्।

किञ्चित्कालं यदा युद्धं प्रवृत्तं तदा इन्द्रजितः मुखे म्लानता दृष्टा विभीषणेन। सः लक्ष्मणम् उक्तवान्– "लक्ष्मण! इन्द्रजितः मनसि भीतिः उत्पन्ना दृश्यते। सः श्रान्तः अस्ति अपि। अतः तस्य संहारार्थम् एषः सुसमयः" इति।

तदा लक्ष्मणः घोराणि अस्त्राणि निरन्तरं प्रयुक्तवान्। बाणप्रहारेण व्रणितः इन्द्रजित् मूर्च्छां गतवान्।

अल्पे एव काले सचेतनः इन्द्रजित् झटिति उत्थाय अभिमुखं स्थितं लक्ष्मणम् उद्दिश्य बाणवर्षणं कृतवान्। विभीषणम् उद्दिश्य अपि तेन बाणाः प्रयुक्ताः।

किन्तु तैः बाणैः लक्ष्मणः अल्पाम् अपि पीडां न अनुभूतवान्। "अये इन्द्रजित्! येषां चित्तविभ्रमः जातः ते एवम् अक्रमेण



बाणप्रयोगं कुर्वन्ति, न तु रणनीतिज्ञाः वीराः'' इति उक्त्वा लक्ष्मणः अपि बाणप्रयोगम् अनुवर्तितवान्।

इन्द्रजितः कवचादयः लक्ष्मणेन चूर्णीकृताः। तस्य शरीरतः रक्तधारा स्रवति स्म। इन्द्रजितः रथः अपि भग्नः। झटिति राक्षसाः अन्यं रथम् आनीय दत्तवन्तः। इन्द्रजित् तं रथम् आरुह्य युद्धम् अनुवर्तितवान्।

रथादीनां भङ्गतः इन्द्रजितः कोपः पराकाष्ठां गतः आसीत्। अतः सः घनघोरं युद्धं कुर्वन् लक्ष्मणस्य कवचस्य अपि भेदनं कृतवान्। उभौ अपि समानतया युद्धं कुरुतः स्म।

'मदीयैः मन्त्रिभिः सह गत्वा मया अपि युद्धं करणीयम्' इति निश्चित्य विभीषणः वानरान् उद्दिश्य उक्तवान्– ''मित्राणि! रावणस्य एकमात्रसहायः इन्द्रजित्। यदि एषः अपि संहृतः भवेत् तर्हि रावणः असहायः निरायुधः च भविष्यति। महान्तः राक्षसवीराः एव मारिताः भवद्भिः। अतः इन्द्रजितः मारणं न दुःस्साध्यम्। एतस्य मारणं वस्तुतः मया कर्तुं शक्यम्। किन्तु एषः मम पुत्रतुल्यः। अतः एतस्य साक्षात् मारणं न उचितम्। वयम् इदानीम् इन्द्रजितः साहाय्यिकां सेनां नाशयाम। ततः केवलस्य तस्य मारणं चिन्तयाम। सर्वे उत्साहेन राक्षससेनायाः मारणे उद्युक्ताः भवन्तु'' इति।

एतत् वचनं श्रुत्वा वानरवीराः द्विगुणितेन उत्साहेन राक्षससेनायाः उपरि आक्रमणं कृतवन्तः। विभीषणः तन्मन्त्रिणः चापि युद्धे उद्युक्ताः अभवन्।

अत्रान्तरे लक्ष्मणः इन्द्रजितः रथस्य सारथेः शिरः कर्तितवान्। तदा इन्द्रजित् स्वयम् एव रथम् अपि चालयन् युद्धं कृतवान्। इन्द्रजितः एतत् अपूर्वं सामर्थ्यं दृष्ट्वा वानरवीराः अपि आश्चर्यचकिताः।

एतम् एव सदवकाशं भावयन् लक्ष्मणः पुनरपि बाणवर्षणं कृतवान्। इन्द्रजितः मुखे म्लानता स्फुटं दृष्टा। एतां म्लानतां लक्षितवतां वानराणाम् उत्साहः प्रवृद्धः। ते

उत्साहेन युद्धं कृतवन्तः।

प्रमाथिः, शरभः, रभसः, गन्दमादनश्चेति चत्वारः वानरवीराः युगपत् आक्रमणं कृत्वा इन्द्रजितः रथस्य अश्वान् मारितवन्तः। अश्वाः रक्तं वमन्तः अधः पतिताः सन्तः प्राणान् अत्यजन्। तदा इन्द्रजित् झटिति भूमौ स्थित्वा युद्धम् अनुवर्तितवान्। राक्षसाः तं परितः तिष्ठन्तः तस्य रक्षणं कृतवन्तः।

"भवन्तः युद्धं कुर्वन्तः तिष्ठन्तु। अहं रहसि राजधानीं प्रतिगत्य अपरं रथम् आरुह्य आगमिष्यामि" इति राक्षसान् उक्त्वा इन्द्रजित् मन्दं ततः निर्गत्य लङ्कां प्राप्तवान्। उत्तमं रथम् आरुह्य वेगेन रणरङ्गं प्रति आगतवान्। अल्पेन एव कालेन अन्यं रथम् आरुह्य प्रत्यागतम् इन्द्रजितं दृष्ट्वा लक्ष्मणः विभीषणः च आश्चर्यचकितौ।



नूतनं रथम् आरुह्य आगतः इन्द्रजित् वानरसेनां धूलिसात्कर्तुम् उद्युक्तः अभवत्। एतत् दृष्ट्वा लक्ष्मणः क्रोधेन इन्द्रजितः हस्ते स्थितं धनुः भञ्जितवान्। तस्य सारथेः शिरः कर्तितवान्। तथापि धैर्यच्युतिम् अप्राप्नुवन् इन्द्रजित् युद्धं कुर्वन् एव आसीत्। सः विभीषणं व्रणितं कृतवान्। विभीषणः स्वगदया इन्द्रजितः रथस्य अश्वान् मारितवान्।

अनन्तरम् इन्द्रजित् लक्ष्मणः च परस्परम् उद्दिश्य दिव्यास्त्रं प्रयुक्तवन्तौ। अन्ते लक्ष्मणः ऐन्द्रास्त्रं प्रयुक्तवान्। तच्च अस्त्रम् इन्द्रजितः शिरः अकर्तयत्।

इन्द्रजितः मरणं दृष्ट्वा विभीषणः वानरवीराः च सन्तोषेण उच्चैः सिंहनादं कृतवन्तः। वानराः महता उत्साहेन राक्षसानां संहारार्थम् उद्युक्ताः अभवन्। एतस्मात् भीताः राक्षसाः ततः पलायितवन्तः।

इन्द्रजितः संहारं कृतवन्तं लक्ष्मणं सन्तोषेण श्लाघितवन्तः वानराः। लक्ष्मणः रामसमीपं गत्वा नमस्कृत्य विनयेन स्थितवान्। तदा रामः लक्ष्मणं प्रीत्या आलिङ्ग्य– "लक्ष्मण! रावणस्य प्रबलं

सहायं संहृतवान् भवान्। इन्द्रजिता विरहितः रावणः शक्तिहीनः संवृत्तः। इतः परं रावणस्य संहारे न क्लेशः" इति उक्त्वा सुषेणं सूचितवान् यत् लक्ष्मणस्य शरीरे जातानां व्रणानां योग्या चिकित्सा करणीया इति।

सुषेणः हनूमता आनीतानां मूल्यानां साहाय्येन लक्ष्मणं व्रणरहितं कृतवान्। व्रणिताः वानराः अपि व्रणरहिताः जाताः। मृताः च उज्जीविताः अभवन्।

राक्षसाः केचन धावन्तः गत्वा रावणम् इन्द्रजितः वधं निवेदितवन्तः। एतां दारुणां वार्तां श्रुत्वा रावणः मूर्च्छां गतः।

अल्पे एव काले सचेतनतां प्राप्य सः इन्द्रजितं स्मरन् दीर्घकालं यावत् विलापं कृतवान्। क्रमशः तस्य शोकः क्रोधरूपेण परिवृत्तः। इदानीं सीतायाः संहारः एव उचितः इति सः निश्चितवान्।

सः समीपे स्थितान् राक्षसान् उद्दिश्य– "मम पुत्रः इन्द्रजित् वानरसेनायाः पुरतः मायासीतां संहृतवान् आसीत्। अहम् इदानीं वास्तविकीं सीताम् एव संहरिष्यामि। पुत्रनाशेन मया यथा शोकः प्राप्तः तथा पत्नीनाशेन रामः अपि शोकसागरे पततु नाम" इति उक्त्वा रौद्ररूपं धृत्वा खड्गम् आकृष्य हस्तेन गृहीत्वा अशोकवनं प्रति प्रस्थितवान्।

एतां वार्तां श्रुत्वा मन्दोदरी रावणमन्त्रिणः च आगत्य रावणस्य गमनं निवारितवन्तः।

"इदानीं वा सीतां रामाय समर्प्य सर्वनाशात् मुक्तिं प्राप्नोतु" इति रुदती हितं बोधितवती मन्दोदरी।

"सीता मारिता चेत् किमपि साधितं न भवति। वास्तविकः शत्रुः रामः। अतः रामविषये क्रोधः उचितः, न तु अबलायाः सीतायाः विषये" इति बोधितवन्तः मन्त्रिणः।

'सत्यम्। रामस्य संहारः एव मम कर्तव्यम्' इति अवगच्छन् रावणः अशोकवनं प्रति गमनं परित्यज्य लङ्कायागं कर्तुं मतिं कृतवान्।



# र स वा र्ताः

## कृत्रिमा वृष्टिः

गुजरातराज्यस्य कच्छप्रदेशे गते जुलैमासे कृत्रिमा वृष्टिः भूमिम् आनीता। २७ प्रदेशेषु एषः 'मेघारोपण'प्रयोगः कृतः, यश्च 'प्राजेक्ट् रेन् ड्राप्'नाम्ना आहूयते। ज्वलतः खनिजाङ्गारस्य उपरि 'सिल्वर अयोडैड' पातितं चेत् खनिजाङ्गारः बाष्परूपं प्राप्य उपरि गत्वा मेघमालां स्पृशति, वृष्टिं



कारयति च। एतत् एव 'मेघारोपणं' (क्लौड् सीडिंग्) नाम। एषः प्रयोगः करणीयः चेत् आकाशे मेघाः, तापमानस्य सामीप्यं, वायौ सुयोग्या जलांशयुक्तता च अवश्यं स्युः। तदा एव प्रयोगः सफलः भवति, न अन्यथा। एतस्य प्रभावः चत्वारि दिनानि यावत् तिष्ठति।

## विकलाङ्गायाः तरणसाहसम्



अन्धैः पर्वतारोहणं कृतम् इति एषु दिनेषु अस्माभिः ज्ञातम् एव। विकलाङ्गा काचित् तरणे नूतनं विक्रमं प्रदर्शितवती इति तु अपरः आश्चर्यकरः विषयः। तस्याः विकलाङ्गायाः नाम जानकी इति। एतस्याः पादौ उभौ अपि पार्श्ववायुरोगेण ग्रस्तौ। बेङ्गलूरुनगरे वित्तकोषे उद्योगिनी एषा सचक्रासनयानेन सञ्चरति। एषा बेङ्गलूरुनगरे तरणशिक्षणं प्राप्तवती। ततः सागरतरणस्य अभ्यासं कर्तुं सा मल्पेप्रदेशं गतवती। सप्ताहाभ्यन्तरे सा तीरात् ७ कि.मी. दूरे स्थितं सेण्ट्मेरीस्द्वीपं तरणेन गतवती। सप्ताहत्रयं यावत् अत्र प्रशिक्षणं प्राप्य एषा शेक्सपीयर्-सागरोद्याने पञ्च सप्ताहान् यावत् जलवाय्वभ्यासात्मकं प्रशिक्षणं प्राप्तवती। ततः गते जुलै मासे इंग्लेण्ड्देशस्य शेक्सपीयर्सागरोद्यानतीरतः फ्रान्स्देशस्य विन्सण्ट्तीरपर्यन्तं – तन्नाम ३७ कि.मी. यावत् – तरणं कृत्वा गतवती। तरणं समाप्य तीरम् आगता सा सानन्दम् उक्तवती यत् मम स्वप्नाः सफलाः जाताः इति। एतस्याः नाम गिन्नीस् पुस्तके स्थानं प्राप्नुयात् इति निरीक्ष्यते।

## अहो, औन्नत्यवृद्धिः स्थगिता!



आन्ध्रप्रदेशस्य करीमनगरे निवसतः गट्टय्यनामकस्य बालकस्य औन्नत्यं, यदा सः एकादशवर्षीयः आसीत् तदा, ४ द्वादशाङ्गुलमात्रम् आसीत्। किन्तु ततः सः वेणुः इव दिने दिने अवर्धत। यदा १७ वर्षीयः जातः तदा तस्य औन्नत्यं ८८ अङ्गुलोन्नतं (२२३ सें.मी.) जातम्। भारते अत्युन्नतः जनः इदानीं सः एव। ततः अपि तस्य औन्नत्यं वर्धमानं यदा दृष्टं तदा तस्य औन्नत्यस्थगनार्थं वैद्यैः शस्त्रचिकित्सा कृता। वैद्यैः ज्ञातं यत् पिट्यूटरिग्रन्थौ जातस्य शोथस्य कारणतः एषा वृद्धिः जायमाना अस्ति इति। ततः शस्त्रचिकित्सामञ्चद्वयं संयोज्य गट्टय्यं शाययित्वा निपुणयोः द्वयोः वैद्ययोः मार्गदर्शने द्वादश वैद्याः पञ्च घण्टाः यावत् प्रयत्नं कृत्वा शोथं शस्त्रचिकित्सया निवारितवन्तः। अतः इदानीं गट्टय्यस्य प्रवृद्धिः स्थगिता अस्ति।



# राज्ञः निर्णयः

वरदानपुरे पूर्वं सदाशिवः महादेवः चेति उभौ वणिजौ आस्ताम्। तयोः मध्ये सामान्या मैत्री आसीत्। सदाशिवः मृदुमनस्कः, परोपकारी, पापभीरुः च। किन्तु महादेवः नितरां कपटः, असूयापरः च। यदि कश्चित् उन्नतिं प्राप्नुयात् तर्हि महादेवः न सहते स्म।

सदाशिवस्य सज्जनत्वं परोपकारित्वं च दृष्ट्वा ग्रामीणाः तम् आदरेण पश्यन्ति स्म। एतत् दृष्ट्वा महादेवः असूयया ज्वलति स्म। दिने दिने वर्धमानं सदाशिवविषयकम् आदरं पश्यतः महादेवस्य ईर्ष्या अपि वर्धते स्म। केषुचित् एव दिनेषु ईर्ष्या द्वेषरूपेण परिवृत्ता। केनापि उपायेन सदाशिवः कष्टे पातनीयः इति निश्चितवान् महादेवः।

एवं स्थिते कदाचित् सदाशिवस्य पुत्र्याः विवाहः निश्चितः अभवत्। विवाहव्ययार्थं तस्य हस्ते पर्याप्तमात्रेण धनं न आसीत्। ऋणं स्वीकरणीयम् इति निश्चित्य सः महादेवसमीपं गत्वा स्वस्य कष्टं निवेद्य ऋणं प्रार्थितवान्।

'सदाशिवं कष्टे पातयितुम् एषः योग्यः समयः' इति चिन्तयित्वा महादेवः उक्तवान्– "मित्र! मम समीपे धनं कुत्र? महता वैभवेन चतुर्थपुत्र्याः विवाहः निर्वर्तितः मया। इदानीं धनम् एव नास्ति। अतः भवान् अन्यतः ऋणं प्राप्तुं प्रयत्नं करोतु" इति।

सङ्कोचशीलः सदाशिवः अपरिचितात् अन्यस्मात् ऋणं प्राप्तुं प्रयत्नं न करोति इति जानाति स्म महादेवः। अतः एव सः तथा उक्तवान् आसीत्।

"महादेव! मम स्वभावं भवान् जानाति एव। अन्यम् ऋणं प्रार्थयितुं मम सङ्कोचः। अतः भवान् एव अन्यतः ऋणम् आनीय ददातु। भवता यदि एतत् साहाय्यं क्रियेत तर्हि

मम शरीरस्य चर्मणा पादरक्षां निर्माय दातुम् अपि सिद्धः अहम्" इति महादेवस्य हस्तौ गृहीत्वा दैन्येन प्रार्थितवान् सदाशिवः।

महादेवः क्षणकालं विचिन्त्य उक्तवान्– "मित्र! भवतः कष्टं दृष्ट्वा अपि साहाय्यम् अकृत्वा स्थातुं मम मनः न इच्छति। एषु दिनेषु मम श्यालस्य मातुलः मम हस्ते किञ्चित् धनं दत्त्वा 'एतत् वर्धयतु' इति उक्तवान् अस्ति। अतः योग्या वृद्धिः दत्ता चेत् तत् धनं दातुं शक्येत" इति।

सदाशिवः योग्यवृद्धिं दातुं सिद्धः आसीत् एव। अतः महादेवः प्रकोष्ठतः धनम् आनीय सदाशिवाय दत्तवान्। सदाशिवस्य पुत्र्याः विवाहः निर्विघ्नं प्रवृत्तः।



चतुर्णां मासानाम् अनन्तरं सदाशिवः योग्यया वृद्ध्या सह ऋणं प्रत्यर्पितवान्। "भवता अहं नितराम् उपकृतः अस्मि" इति कृतज्ञतापूर्वकम् उक्तवान् च।

तदा महादेवः आश्चर्यं प्रकटयन् पृष्टवान्– "तदस्तु तावत्। पादरक्षायुगलं कुत्र?" इति।

"पादरक्षायुगलम् इति? किं तत्?" इति आश्चर्येण पृष्टवान् सदाशिवः।

"अये, किमपि अजानन् इव वदति खलु भवान्? सर्वं कलिपुरुषस्य प्रभावः! धनस्वीकरणसमये भवता एव उक्तम् आसीत् खलु– मम शरीरस्य चर्मणा पादरक्षां निर्माय दास्यामि इति? एतावता एव तत् विस्मृतं वा?" इति कोपेन पृष्टवान् महादेवः।

एतत् श्रुत्वा आश्चर्येण स्तब्धः सदाशिवः– "मित्र! भवान् उपहासं तु कुर्वन् नास्ति खलु? वचनसमर्थनार्थं कदाचित् यत् उच्यते तत् यथार्थं भावयेत् वा कोऽपि?" इति प्रतिप्रश्नं कृतवान्।

किन्तु महादेवः कोपवशात् उच्चस्वरेण– "अये! मया भवतः उपहासः किमर्थं क्रियेत? यदा धनम् आवश्यकम् आसीत् तदा यत् उक्तं तत् अवश्यं परिपालनीयम् एव। वचनपरिपालनं भवतः धर्मः। वचनभङ्गं तु अहं न सहे" इति उक्तवान्।

महादेवस्य उच्चं स्वरं श्रुत्वा प्रतिवेशिनः केचन तत्र उपस्थिताः। ते महादेवं सान्त्वयितुं

प्रयत्नं कृतवन्तः। किन्तु महादेवः जनानाम् उपदेशं तिरस्कुर्वन् सुदृढम् उक्तवान्– "मह्यं तस्य चर्मणा निर्मितं पादरक्षायुगलम् आवश्यकम् एव" इति।

एषः विवादः ग्रामप्रमुखस्य समीपं नीतः। महादेवतः उत्कोचं प्राप्य ग्रामप्रमुखः निर्णयं श्रावितवान् यत् महादेवः यत् वदति तत् उचितम् एव इति। एतत् श्रुतवतः सदाशिवस्य दिग्भ्रान्तिः। सः किङ्कर्तव्यतामूढः जातः। तदा तस्य पुत्री जामाता च बोधितवन्तौ यत् महाराजसमीपं गतं चेत् न्यायः प्राप्यते इति।

राजधानीं गत्वा राजानं दृष्ट्वा सर्वं निवेदितवान् सदाशिवः। राजा महादेवम् अपि आनाय्य महादेवस्य कथनम् अपि श्रुत्वा– "भवन्तौ सप्ताहानन्तरम् आगच्छताम्। तदा अहं निर्णयं श्रावयिष्यामि" इति उक्त्वा तौ प्रेषितवान्।

ततः दिनद्वयस्य अनन्तरं कदाचित् महादेवः नगरं गच्छन् आसीत्। मार्गे अरण्यप्रदेशे चोराः तस्य उपरि आक्रमणं कृतवन्तः। तदीयानि वस्तूनि स्वायत्तीकृत्य तं मारयितुम् उद्युक्ताः अभवन्। तावता मृगयार्थम् आगतः राजा तत्र आगतवान्। राजानं दृष्ट्वा महादेवः दैन्येन नमस्कृत्य कम्पमानेन स्वरेण– "प्रभो, भवता रक्षणीयः अहम्। यदि अहं जीवेयं तर्हि भवतः पुत्रत्वं प्राप्य सेवां कृत्वा वा उपकारऋणात् मुक्तिं प्राप्नुयाम्" इति प्रार्थितवान्।

राजा खड्गम् आकृष्य चोरान् प्रहर्तुम्



उद्युक्तः। किन्तु तावता चोराः महादेवं परित्यज्य पलायनं कृतवन्तः। महादेवः राजानं नमस्कृत्य कृतज्ञतावचनानि उक्तवान्।

सप्ताहस्य समयः यदा समाप्तः तदा सदाशिवः महादेवः च राज्ञः समीपं गतवन्तौ। राजा पुनरपि उभयोः अपि कथनं श्रुत्वा निर्णयं श्रावितवान्– "दत्तं वचनं परिपालनीयम् एव। अतः सदाशिवेन स्वस्य चर्म अपनीय पादरक्षायुगलं निर्माय महादेवाय अर्पणीयम्" इति।

राज्ञः निर्णयं श्रुत्वा सदाशिवः नितरां दिग्भ्रान्तः। किन्तु महादेवः ग्रामाधिकारी च नितरां सन्तुष्टौ।

तदा राजा महादेवं पश्यन् उक्तवान्– "मम निर्णयः योग्यः खलु? तदस्तु, भवता यत् वचनं दत्तं तस्य का गतिः?" इति।

"मया किं वचनं दत्तं महाप्रभो!" इति पृष्टवान् महादेवः।

"अये, किम् एतत्? द्वित्रेभ्यः दिनेभ्यः पूर्वं दत्तं वचनम् एतावता एव विस्मृतं वा? यदा अरण्ये चोराः आक्रमणं कृतवन्तः आसन् तदा भवान् प्रार्थितवान् खलु– यदि भवान् मां रक्षेत् तर्हि भवतः पुत्रः सन् वा अहम् ऋणात् मुक्तः भवेयम् इति? मया भवान् रक्षितः। अतः भवता इदानीं मरणं प्राप्य मम पुत्रत्वेन जन्म प्राप्तव्यम्। भवता स्ववचनं पालनीयम् एव" इति उक्तवान् राजा।

"प्रभो! विशिष्टे तादृशे सन्दर्भे अविचिन्त्य उक्तं वचनं तत्। परमार्थवचनं न



तत्'' इति उक्तवान् महादेवः।

''कथं सम्भवेत् एतत्? सदाशिवेन अपि एतादृशम् एव वचनं खलु उक्तम् आसीत्? किन्तु तदाधारेण भवान् विवादं कुर्वन् अत्र आगतवान्। दत्तं वचनं परिपालनीयम् एव इति मया निर्णयः अपि श्रावितः। एवं स्थिते इदानीम् अहं भवतः विषये यदि अन्यथा व्यवहारं कुर्यां तर्हि अहं दोषी भवेयम्। अतः भवतः विषये काऽपि कृपा प्रदर्शयितुं न शक्या एव। एतत्क्षणे एव सदाशिवः स्वचर्म उत्पाट्य तेन भवते पादरक्षायुगलं निर्माय दास्यति। तत्समनन्तरम् एव भवता प्राणाः अर्पणीयाः। इष्टं दैवं स्मरतु तावत् मरणार्थं सिद्धः भवतु'' इति पुनः उक्तवान् राजा।

इदानीं सभायाम् उपस्थिताः सर्वे ज्ञातवन्तः यत् राज्ञा आरम्भे किमर्थं तादृशः निर्णयः श्रावितः इति। ते उच्चैः हसितवन्तः।

महादेवः लज्जया शिरः अवनमय्य स्थितवान्। सः ज्ञातवान् यत् चोराणाम् आक्रमणं, रक्षणार्थं राज्ञः प्रयत्नः इत्यादयः न वास्तविकाः, अपि तु अभिनीताः इति।

सः राज्ञः पादौ गृहीत्वा अश्रूणि स्रावयन्– ''प्रभो, मया अनुचितं कृतम्। इतः परम् एवं न करिष्यामि। कृपया क्षन्तव्यः अहम्'' इति दैन्येन प्रार्थितवान्।

तदा राजा उक्तवान्– ''अस्तु। क्षमा दीयते मया। भवान् सदाशिवं क्षमां प्रार्थयतु'' इति।

महादेवः सदाशिवस्य हस्तौ गृहीत्वा क्षमां प्रार्थितवान्। सदाशिवः स्वभावतः सज्जनः एव। अतः सः औदार्येण क्षमां प्रदर्श्य आनन्दाश्रूणि स्रावयन् तम् आलिङ्गितवान्।

राजा सामान्येन दण्डेन ग्रामाधिकारिणं दण्डयित्वा उक्तवान् यत् यदि इतः परम् एवं क्रियेत तर्हि भवान् कठोरं दण्ड्येत इति। राज्ञः निर्णयक्रमं दृष्ट्वा सर्वे सन्तोषं प्रकटितवन्तः।

एतदनन्तरं महादेवे महत् परिवर्तनं जातम्। सः ईर्ष्यास्वभावं परित्यज्य सज्जनः इति ख्यातिं प्राप्तवान्। सदाशिवस्य आत्मीयं मित्रं जातः च।



# उत्तमा धेनुः

पूर्वं कश्चन भूस्वामी आसीत्। क्षीरदात्र्याः धेन्वाः क्रयणे तस्य विशेषासक्तिः। समीपे यत्रकुत्रापि साप्ताहिकपशुविक्रयणं प्रचलति चेत् तत्र भूस्वामी सेवकैः सह अवश्यं गच्छति। उत्तमा धेनुः दृष्टा चेत् तां क्रीत्वा आगच्छति।

एवं कदाचित् भूस्वामी साप्ताहिकविक्रयणस्थलं गतवान्। किन्तु तत्र विक्रयणार्थम् आगता काऽपि धेनुः तस्य इष्टाय न अभवत्। अत्रान्तरे कश्चन कृषिकः क्षीरदात्र्या धेन्वा तर्णकेन च सह विपणिम् आगच्छन् दृष्टः। धेनुः उत्तमा आसीत्। अतः भूस्वामी कृषिकस्य समीपं गत्वा पृष्टवान्– "एतस्याः विक्रयणं कर्तुम् इच्छति खलु भवान्?" इति।

"अथ किम्? विक्रयणार्थम् एव खलु एतावद्दूरम् एतां धेनुम् आनीतवान् अस्मि?" इति प्रतिप्रश्नं कृतवान् कृषिकः।

"भवतः धेनुः उत्तमा अस्ति वा?" इति पृष्टवान् भूस्वामी।

"मम दृष्ट्या मम धेनुः उत्तमा एव। तत्तस्य वस्तु तत्तस्य दृष्ट्या उत्तमं भवति एव खलु?" इति हसन् उक्तवान् कृषिकः।

"अस्तु तावत्, भवतः धेनुः प्रतुम्फति वा?" इति पृष्टवान् भूस्वामी।

"आं श्रीमन्, धेनुः प्रतुम्फति। कश्चित् मानवः पीडितः चेत् निन्दितः चेद् वा सः प्रतिपीडनं प्रतिनिन्दनं वा करोति। धेनुः तु पीडा प्राप्ता चेत् प्रतुम्फनं करोति। अत्र विचित्रं किमपि नास्ति" इति उक्तवान् कृषिकः।

"मित्र! तदस्तु, भवतः धेनुः कियत् क्षीरं ददाति?" इति पृष्टवान् भूस्वामी।

"एतस्य उत्तरस्य दानं कष्टकरम् एव। यतः कदाचित् तस्याः ऊधसि अधिकं क्षीरं भवति, पुनः कदाचित् न्यूनम्। किन्तु एतावत् तु निश्चितं यत् यावत् क्षीरम् ऊधसि भवति तावत् निर्वञ्चनं ददाति सा" इति उक्तवान् कृषिकः। कृषिकस्य चातुर्यपूर्णम् उत्तरं श्रुत्वा भूस्वामी सन्तुष्टः। कृषिकेण यत् मूल्यम् उक्तं तावत् धनं दत्त्वा धेनुं क्रीत्वा गतवान् भूस्वामी।






# सन्मार्गगामी

इरानदेशे पूर्वं अब्राहिमः इस्मायिलः चेति उभौ काष्ठविक्रेतारौ आस्ताम्। तौ प्रतिदिनम् अरण्यं गत्वा काष्ठानि सङ्गृह्य नगरं नयतः। काष्ठानां विक्रयणतः यत् धनं प्राप्यते तेन जीवनं निर्वहतः। ताभ्यां यावत् सम्पाद्यते तावत् कुटुम्बपोषणार्थं सर्वथा अपर्याप्तं भवति स्म। अतः तौ महता कष्टेन दिनानि यापयन्तौ, धनिकत्वं प्राप्तव्यम् इति, प्रासादसदृशं भवनं निर्मातव्यम् इति च स्वप्नं पश्यतः स्म।

इब्राहिमः दैवभक्तः राजभक्तः च। अतः सः इच्छति स्म यत् धनिकत्वं यत् प्राप्यते तत् राज्ञः देवस्य च अनुमतम् एव स्यात् इति। किन्तु इस्मायिलस्य चिन्तनं सर्वथा एतद्विरुद्धम्। सः चिन्तयति स्म यत् न देवः दारिद्र्यं निवारयति, न वा राजा धनिकं करोति इति। केनापि मार्गेण धनिकत्वं प्राप्तव्यम् एव इति तस्य प्रबला इच्छा।

कदाचित् अरण्यं गतवन्तौ तौ भिन्नस्थले काष्ठच्छेदनं कर्तुम् उद्युक्तौ अभवताम्। काष्ठच्छेदनसमये इस्मायिलस्य मनसि कश्चन विचारः आगतः। सः इब्राहिमस्य समीपं गत्वा उक्तवान्– "अरण्ये कुत्रचित् निधिः भवति इति जनाः वदन्ति। यदि तादृशः निधिः कोऽपि आवाभ्यां प्राप्तः स्यात् तर्हि वरम् अभविष्यत्" इति।

"अये, तादृशः निधिः प्राप्तः चेदपि कः लाभः? प्राप्तः निधिः राज्ञे अर्पणीयः भवति एव" इति इस्मायिलम् उक्तवान् इब्राहिमः।

"राज्ञे किमर्थम् अर्पणीयम्? निधिः प्राप्तः चेत् अहं तु कदापि राज्ञे न अर्पयामि" इति उक्तवान् इस्मायिलः।

अनन्तरदिने तौ यथापूर्वं काष्ठच्छेदनार्थम् अरण्यं गतवन्तौ। इब्राहिमः एकं शुष्कं

"इरानदेशीया जानपदकथा"

वृक्षप्रकाण्डं दृष्ट्वा तस्य च्छेदनार्थं परशुना प्रहारं दत्तवान्। द्वित्राः प्रहाराः यदा दत्ताः तदा वृक्षः द्विधा च्छिन्नः, वृक्षमध्यात् किञ्चन सुवर्णपात्रं निर्गतं च। सुवर्णपात्रस्य दर्शनतः इब्राहिमः नितराम् आश्चर्यचकितः। पात्रस्य अन्तः बहूनि सुवर्णनाणकानि अपि आसन्।

इब्राहिमः धावन् इस्मायिलस्य समीपं गतवान्। धावन्तम् आगच्छन्तं इब्राहिमं दृष्ट्वा इस्मायिलः क्षणकालम् आश्चर्यचकितः भीतः च। किन्तु यदा प्रवृत्तं सर्वं ज्ञातं तदा सः इब्राहिमं पृष्टवान्— "इदानीम् एतत् किं करोति भवान्?" इति।

"किम् अन्यत् कर्तुं शक्येत? सर्वं राज्ञे अर्पणीयम् एव। किन्तु निधिप्राप्त्या सन्तुष्टः राजा यदि किमपि दद्यात् तर्हि तत् सन्तोषेण स्वीकुर्याम्" इति उक्तवान् इब्राहिमः।

"अये मूर्खशिखामणे! हस्तम् आगतां लक्ष्मीं कोऽपि अन्यस्मै अर्पयेत् वा? एवं करोति चेत् भवान् जीवने पुनः कदापि सुखं प्राप्तुं न शक्नुयात्। भाग्यलक्ष्म्याः अनुग्रहः जीवने कदाचित् एव भवितुम् अर्हति, न तु तदा तदा" इति बोधितवान् इस्मायिलः।

"ललाटे यत् लिखितं भवति तत् तु भवति एव" इति दृढस्वरेण उक्तवान् इब्राहिमः। इस्मायिलः मौनं स्वकार्ये मग्नः अभवत्।

सुवर्णपात्रं द्रष्टुम् अपि अनागतवतः इस्मायिलस्य व्यवहारेण इब्राहिमः नितरां खिन्नः। सः मौनं प्रतिगत्य काष्ठानि सङ्गृह्य



बद्धवान्। बन्धनमध्ये नाणकसहितं सुवर्णपात्रं स्थापितवान्। ततः गृहं गतवान् च।

काष्ठबन्धं गृहे एव संस्थाप्य सुवर्णपात्रं स्वीकृत्य राज्ञः समीपं गतवान् सः। सुवर्णपात्रं राज्ञः पादयोः पुरतः संस्थाप्य तत् कथं प्राप्तम् इति विस्तरेण राजानं निवेदितवान् सः।

राजा पूर्णायां सभायां इब्राहिमस्य प्रामाणिकतायाः राजभक्तेः च प्रशंसां कृतवान्। सुवर्णपात्रं स्वीकृत्य कोषागारतः शतं दीनारान् आनाय्य इब्राहिमाय दत्तवान् सः। पात्रस्थानि नाणकानि तु न स्पृष्टवान्।

इब्राहिमः राज्ञा दत्तान् दीनारान् स्वीकृत्य स्वग्रामं गत्वा वाणिज्यम् आरब्धवान्।

ततः दिनद्वयाभ्यन्तरे इब्राहिमेण वार्ता श्रुता यत् कृतकसुवर्णनाणकानां विनिमये उद्युक्तः इस्मायिलः राजधान्यां राजभटैः बद्धः, कारागारे स्थापितः च इति। एतत् श्रुत्वा इब्राहिमः तस्मिन् एव दिने राजधानीं गतवान्।

सः राजानं दृष्ट्वा निवेदितवान्– "प्रभो! इस्मायिलः मम मित्रम्। तेन यः अपराधः कृतः तदर्थं यत् दण्डधनं दातव्यं तत् अहं दास्यामि। कृपया इस्मायिलं बन्धविमुक्तं करोतु" इति।

तदा राजा सभासदः उद्दिश्य उक्तवान्– "यः दैवभीरुः राजभक्तः च सन् धर्ममार्गेण जीवति सः जीवने सुखं शान्तिं च प्राप्नोति। यस्तु एतद्विपरीतं मार्गम् आश्रित्य जीवति सः कष्टानि अनुभवति। अत्र प्रत्यक्षम् उदाहरणम् एषः इब्राहिमः, एतस्य मित्रम् इस्मायिलः च। एषः इब्राहिमः दैवभीरुः राजभक्तः च। एतस्य मित्रं सर्वथा एतद्विरुद्धम्। अहं कदाचित् मृगयार्थम् अरण्यं यदा गतः तदा एतयोः वार्तालापं श्रुतवान्। ततः एतयोः परीक्षार्थं, यत्र एतौ काष्ठच्छेदनं कुरुतः तत्र कृतकसुवर्णनाणकैः युक्तानि पात्राणि वृक्षकोटरे स्थापितवान्। धर्ममार्गानुयायी एषः इब्राहिमः आत्मना प्राप्तं नाणकपात्रं मह्यं समर्प्य शतं दीनाराम् पारितोषिकरूपेण प्राप्तवान्। एतन्मित्रम् इस्मायिलः तु दुराशाग्रस्तः सन् सर्वं स्वायत्तीकर्तुम् इष्टवान्। अतः कृतकनाणकानां विनिमयकाले सः गृहीतः अभवत्" इति।

अनन्तरं राजा इब्राहिमस्य प्रार्थनाम् अङ्गीकुर्वन् दण्डम् अस्वीकृत्य एव इस्मायिलं बन्धविमुक्तं कृतवान्। 'इतःपरं कदापि अन्याय्यमार्गस्य आश्रयणं पुनः करोति चेत् भवतः मरणदण्डनं निश्चितम्। अतः सन्मार्गेण जीवतु भवान्" इति बोधितवान् च।

एतेन इस्मायिलः विवेकं प्राप्य इब्राहिमम् अनुसरन् सन्मार्गगामी जातः।



# प्रकृतिवैचित्र्याणि –



## वानरेषु शरीरस्वच्छताबुद्धिः

मानवाः इव वानराः अपि शरीरस्वच्छतार्थं प्रयत्नं कुर्वन्ति। नखैः नखनं तु प्रायः सर्वैः दृष्टम् एव। एतावदेव न, ते पर्णैः स्वजातीयस्य अपरस्य शरीरं मार्जयन्ति। कदाचित् कश्चित् अपरस्य दन्तान् शलाकाभिः स्वच्छीकरोति अपि।



## लक्ष्यैकदृष्टयः मीनाः

अर्चर्मीनाः २० सें.मी. दीर्घाः भवन्ति। श्वेतवर्णीयानाम् एतेषां शरीरे कृष्णरेखाः तत्र तत्र दृश्यन्ते। एतेषाम् आहारसम्पादनक्रमः नितरां विचित्रः। विशालनेत्रयुक्ताः एते मीनाः जलस्य उपरितनभागम् आगत्य जलस्य उपरि लम्बमानेषु सस्यपर्णेषु स्थितान् कीटान् लक्ष्यीकृत्य जलधाराम् उत्क्षिपन्ति। यदा कीटाः जले पतन्ति तदा झटिति तान् गृहीत्वा खादन्ति। एतत्सन्दर्भे कीटानां दृष्टिगोचरता यथा न स्यात् तथा जागरूकतया व्यवहरन्ति एते।

## पतङ्गिकायाः घोरं स्वरूपम्

पतङ्गिका, या च आंग्लभाषया 'ड्रागान् फ्लायी' इति उच्यते, कीटदशायां 'निम्प्'नाम्ना उच्यते। निम्प्शब्दस्य अर्थः जलचरी इति। एतस्यां दशायां तस्याः महती बुभुक्षा भवति। अतः सा जले स्थितान् लघुमीनान्, मण्डूकशिशून् च गृहीत्वा खादति। अन्यः आहारः न लब्धः चेत् स्वसदृशीः अन्याः जलचरीः एव खादति। एवं जले एतस्याः स्वरूपं नितरां घोरम्। एतस्याः अवस्थायाः अन्ते कीटचर्म विभिद्य पतङ्गिका बाह्यप्रपञ्चं प्रविशति। सुन्दरौ पक्षौ प्राप्य कीटादीनां प्राप्त्यर्थम् उड्डीय गच्छति च।



# न आगच्छति भवती?

| | | |
|---|---|---|
| वीणा– | किं वाणि! गभीराध्ययनं प्रचलति वा? | Vani, you seem to be very serious at your studies! |
| वाणी – | न तथा। आगच्छतु, उपविशतु। | Oh, nothing like that, come in, please sit down. |
| वी – | मुखेन तु न इति वदति भवती। उषसि एव पठनस्य दर्शनात् एव ज्ञायते यत् गभीराध्ययनं प्रचलति इति। | I know you will not admit but I am seeing you from morning. You have been studying seriously. |
| वा – | उषसि पठनं मम दैनन्दिनः अभ्यासः। तदस्तु, उषसि एव मम गृहम् आगतवती खलु? कः विशेषः? | Studying in the morning is my daily routine. Well, you have come so early in the morning, what's the matter? |
| वी – | अद्य वयं सर्वे वनभोजनार्थं गच्छन्तः स्मः। भवती अपि आगच्छतु इति निवेदयितुम् आगता। | We are all going for a picnic today; I thought I would invite you. |
| वा – | क्षाम्यतु वीणे! अद्य मम बन्धुगृहे पूजाकार्यक्रमः अस्ति। तदर्थं माता गच्छति। अतः सायम्पर्यन्तं गृहरक्षणं मम दायित्वम्। | I am sorry, Veena. There's a pooja at my cousin's place. My mother is going and naturally I will have to guard the home till evening. |
| वी – | कीलयित्वा आगच्छतु तावत्। | Can't you lock the house and go with us? |
| वा – | कीलनप्रस्तावः यदि क्रियेत तर्हि माता गमनविचारम् एव परित्यजेत्। गृहकीलनं कदापि न इच्छति माता। | If I say so, my mother may cancel her programme. She would never like the house to be locked. |
| वी – | तर्हि न आगच्छति भवती। | You are not going with us then? |
| वा – | क्षाम्यतु भगिनि, अनन्योपाया अस्मि। | Sorry. |
| वी – | अस्तु, आगच्छामि तावत्। | OK. See you then. |

# कठिनशब्दानां सान्दर्भिकाः अर्थाः

| | |
|---|---|
| अङ्गुलीयकम् - | Ring |
| अनिर्वचनीयम् - | Indescribable |
| अमानुषम् - | Inhuman |
| असौविध्यम् - | Inconvenience |
| अहोरात्रम् - | Day and night |
| आवुत्तः - | Brother-in-law |
| उच्चाटयति - | Drives away |
| उषसि - | At dawn |
| ऊधः - | Udder |
| ऊर्णा - | Wool |
| ऊहा - | Imagination |
| कन्दः - | Edible roots and tubers |
| किसलयम् - | A sprout |
| क्षीरदात्री - | Milch cow |
| खनिजाङ्गारः - | Coal |
| ज्ञानवत्ता - | Knowledgeable |
| तर्णकः - | Calf |
| धार्ष्ट्यम् - | Arrogance |
| निधिः - | Treasure |
| निन्द्यम् - | Blameworthy |
| नीरोगः - | Healthy |
| नेपथ्यम् - | Background |
| परिवृत्तः - | Changed |
| पार्श्ववायुरोगः - | Paralysis |
| प्रकाण्डः - | The trunk of a tree |
| प्रस्तुम्फति - | Pokes |
| प्राकारभित्तिः - | Compound |
| बाष्पम् - | Steam |
| भल्लातकम् - | Cashew |
| मेधावी - | Intelligent |
| रूक्षः - | Rough |
| विनिमयः - | To exchange |
| वेणुः - | Bamboo |
| शस्त्रचिकित्सा - | Surgical treatment |
| शृङ्खला - | Chain |
| शोथः - | Swelling |
| श्रान्तिः - | Tiresomeness |
| सोपहासम् - | With ridicule |
| सोपानम् - | A step |
| स्थालिका - | Plate |

# चित्रशीर्षिका-स्पर्धा * पारितोषिकं १००/- रूप्यकाणि

## विजितां शीर्षिकां फेब्रवरी-९३ मासे प्रकटयिष्यामः।


V. Muthuraman


Subhash G. Shenoy

*उपरितनं चित्रद्वयं पश्यन्तु। *युक्तां शीर्षिकां परस्पर-सम्बन्धि-वाक्यद्वयेन लिखित्वा डिसेम्बर्-२० दिनाङ्कतः पूर्वम् एव प्रेषयन्तु। *अनन्तरम् आगताः शीर्षिकाः न परिशीलयिष्यामः। *स्पर्धायां विजेता १००/- रूप्यकात्मकं पारितोषिकं प्राप्स्यति। *शीर्षिकाः समपत्रे (पोस्ट्-कार्ड्) लेखनीयाः। तत्र अन्यः विषयः न लेखनीयः। *अधोनिर्दिष्ट-सङ्केताय शीर्षिकाः प्रेषणीयाः—

**चन्दमामा (संस्कृतम्) 'अक्षरम्', ८ उपमार्गः, II घट्टः, गिरिनगरम्, बेङ्गलूरु-५६००८५**

---

## 'अक्टोबर्'मासस्य चित्रशीर्षिकास्पर्धायाः परिणामः—

प्रथमचित्रम् - **वेत्रताडनं हि कृषिकार्ये चोदयति।**

द्वितीयचित्रम् - **दुर्भरजीवनं तु कष्टसहनं बोधयति।**

प्रेषकः - श्री जनार्दन ताम्हणकरः, चिन्मयप्रौढशाला, कद्रि, मङ्गलूरु-३, कर्णाटकम्


# चन्दमामा

वार्षिकं ग्राहकशुल्कं (भारते) रू. ४८-००

विदेशीय-ग्राहकशुल्क-विवरणार्थं लिखन्तु -

डाल्टन् एजन्सीस्, चन्दमामा बिल्डिङ्गस्, वडपळनी, मद्रास्-६०००२६



Printed by B.V. REDDI at Prasad Process Private Ltd., 188 N.S.K. Salai, Madras 600 026 (India) and Published by B. VISHWANATHA REDDI on behalf of CHANDAMAMA PUBLICATIONS, Chandamama Buildings, Vadapalani, Madras 600 026 (India). Controlling Editor: NAGI REDDI.



The stories, articles and designs contained herein are exclusive property of the Publishers and copying or adapting

अपने प्यारे चहेते के लिए जो हो दूर सुदूर
है न यहाँ अनोखा उपहार जो होगा प्यार भरपूर

# चन्दमामा



प्यारी-प्यारी सी चंदामामा दीजिए उसे उसकी अपनी पसंद की भाषा में—
आसामी, बंगला, अंग्रेजी, गुजराती, हिन्दी, कन्नड
मलयालम, मराठी, उड़िया, संस्कृत, तमिल या तेलुगु
—और घर से अलग कहीं दूर रहे उसे लूटने दीजिए घर की मौज-मस्ती

चन्दे की दरें (वार्षिक)

**आस्ट्रेलिया, जापान, मलेशिया और श्रीलंका के लिए**

समुद्री जहाज़ से रु. 105.00   वायु सेवा से रु. **252.00**

**फ्रान्स, सिंगापुर, यू.के., यू.एस.ए.,**
**पश्चिम जर्मनी और दूसरे देशों के लिए**

समुद्री जहाज़ से रु. 111.00   वायु सेवा से रु. **252.00**

अपने चन्दे की रकम डिमांड ड्रॉफ्ट या मनी ऑर्डर द्वारा
'चन्दामामा पब्लिकेशन्स' के नाम से निम्न पते पर भेजिए:

सर्क्युलेशन मैनेजर, चन्दामामा पब्लिकेशन्स, चन्दामामा बिल्डिंग्स, वडपलनी, मद्रास-६०० ०२६.

